श्रीगणेशायनमः॥ ॥पद्यं॥ यदुवंशकेतौ श्रीकृष्णे निजपुरींद्वारकांयातेसति ततः मयोदैत्यः राज्ञेयुधिष्ठिरराजार्थंमणिसभांरत्नमयींसभां रचयांबभूव निर्ममे यस्याःसभायाःरूपंशोभांकांतिंवासमवलोक्य स्रुधर्मादिवसभाशुचाशोकेन अधुनापिगतागतेगमनागमनेजुषतेसे वतेस्रोगतागतजुट्तंजीवं प्राणं बृहस्पतिंचवहते अन्यस्या अपिपरोत्कर्षासहनजन्य शोकेनप्राणानां गमनागमनंभवति॥१॥विपंच्या

॥पद्यं॥ यातेततोनिजपुरींयदुवंशकेतौराज्ञेमयोमणिसभांरचयांबभूव यस्यारूपंसमवलोक्यशुचाधुनापि
जीवंगतागतजुषंवहतेस्रुधर्मा १ तामधिष्ठातुमागत्यतंमखंकर्तुमन्वशात् विपंचीरवसारज्ञोनृपंचीरवसांवरः २

वीणायाःरवस्य शब्दस्य सारंजनातिसः चीराणि वल्कलानिवसते परिदधते तेचीरवसः मुनयःतेषांमध्येवरःश्रेष्ठःनारदः तां सभां अधिष्ठातुंअधिष्ठातारंतंनृपं धर्मराजं आगत्य मखंराजसूययज्ञं कर्तुंअन्वशात् आज्ञापयामास॥ २॥ ॥श्रीकृष्णायनमः॥ ॥७॥ ॥ १

॥गद्यं॥ ततः नारदानुशासनानंतरं धर्मराजेन दूतैः कृत्वा आहूतः पुरुहूतानुजः श्रीकृष्णः निरंतरायमेव नि र्विघ्नमेव महांतं सप्ततंतुं राजसूययज्ञं आहर्तुं कर्तुं मनो यस्य तस्य कौंतेयस्य धर्मराजस्य उपांते समीपे रहसि मुहूर्तं संमंत्र्य उत्साहप्रभवाभ्यां उत्साहशक्तिप्रभुशक्तिभ्यां मूर्तो मूर्तिमान् मंत्र इव मंत्रशक्तिरिव तेन युधिष्ठिरेण प्रहिताभ्यां प्रेरिताभ्यां गंधवहस्कंधाधोधिपयोः वाय्विंद्रयोः नंदनाभ्यां भीमार्जुनाभ्यां अनुसंधीयमानं पश्चात्क्रमनेनानुलक्ष्यमाणं गमनं यस्य तथाभूतः सन् मगधान् देशान् अवगाह्य प्रविश्य द्वयोः बृहद्रथपत्न्योः द्विमात्रोः अपत्यं पुमान् द्वैमातुरः तं पु

॥गद्यं॥ ततोदूताहूतः पुरुहूतानुजो निरंतरायमेव महांतं सप्ततंतुमाहर्तुमनसः कौंतेयस्योपांते रहसि मुहूर्तं संमंत्र्योत्साह
प्रभवाभ्यां मूर्तो मंत्र इव तत्प्रहिताभ्यां गंधवहस्कंधाधोधिपनंदनाभ्यामनुसंधीयमानगमनो नदीतटाकैर्द्विमातृकतया
स्वपालयितारमनुकुर्वतो विविधान्यदुर्लभवस्तुधान्यसमेधितवसुधान्मागधानवगाह्य विशृंखल हर्षितगिरिव्रजम
विशृंखला खेदितमहीभृत्कुलं जराघटितदेहमपि देदीप्यमानबलसंपदमाशाजेतारमपि परार्थापहारजागरितारं माग
धमपि विगीतव्यापारं द्वैमातुरं महारथं पृथ्वीनाथमेत्य प्रधनं ननाथ॥१॥

प्रमदं ऋषिदत्तं फलं राज्ञा द्विधा कृत्वा द्वयोः पत्न्योः दत्तं तेन ताभ्यां द्वे शकले जाते ते अचेतनत्वात् बहिः क्षिप्ते जराराक्षस्या संधिते इति भागवतीयेतिहासः महारथं महावीरं पृथिवीनाथं राजानं जरासंधं एत्य प्रधनं युद्धं ननाथ ययाचे कथंभूतान् मागधान् नद्यश्च तटाकाः सरांसि च तैः स्वपयोभिः पोषितत्वात् या द्विमातृकता यद्वा तैरेव नदीमातृकाः दृष्ट्यादेवमा

नृकाश्चैतेनद्विमातृकतांतयास्वपालयितारं राजानंजरासंधं अनुकुर्वतइव तथाविविधानि अन्येषांदुर्लभानि यानिवस्तूधान्यानि द्रव्यधान्या
नितैः समेधितासम्यक् वृद्धिंप्राप्तावस्तूधायेषांतान् कथंभूतपृथिवीनाथंविशृंखलः शृंखलारहितः अतएव हर्षितः गिरिव्रजः गिरिसमुदायोये
न तमपि शृंखलाभिः खेदितंमहीभृत्कुलं पर्वतसमूहोयेनतमितिविरोधः विशृंखलंनिष्प्रतिबंधंयथातथाहर्षितंगिरिव्रजनगरंयेनतंशृंखला-
खेदितराजसमूहमितिपरिहारः तथाजरयावार्धक्येनघटितायुक्तातनुर्यस्यतमपिदेदीप्यमानादेहबलसंपत्यस्यतमितिविरोधः जरानाम्न्या

॥ग० तत्क्षणमतितिक्ष्णतयात्वमष्टादशकृत्वो दृष्टापजयोस्ययंपुनरितरः किशोरइतिकृष्णावुभावप्यवधीर्यहिडिंबकु
टुंबशोकोदयादारभ्यप्रवीरजनकर्णिकामौक्तिकायमानभुजकीर्तेरात्मनः संमुखीनं दृढतरपरिकर बंधंजरासंधंसमी
रकुमारः पंचदशदिनानिनियुध्येषांतृतीयभागसंख्यानपदाभिधेयेनसहघटयांबभूव॥२॥

राक्षस्याघटिताकृतसंधानातनु
र्यस्येतिपरिहारः तथाआशायाः जेतारमपिपरार्थापहारेपरद्रव्यापहारेजागरितारं सावधानमितिविरोधः आशाजेतारंदिग्जेतारमितिपरिहारः त
थामागधमपिविगीतः गीतेनरहितः व्यापारोयस्यतमितिविरोधः मागधंमगधदेशानांराजानंविगीतः निंद्यः परोपद्रवबहुलः व्यापारोयस्यत
मितिपरिहारः॥१॥ तत्क्षणंयुद्धयाञ्चासमयएव अतितिक्ष्णतयारूपांतरेणयुद्धयाञ्चा सहनेनत्वं अष्टादशकृत्वः अष्टादशवारान्दृष्टः अप २
जयोयस्यतथाभूतोसि अयमितरः पुनः अयमन्यस्तुकिशोरः अल्पवयाबालोस्तिइतिस्वसाम्याभावप्रदर्शकवचनेनउभावपिकृष्णौकृष्णार्जुनौ

अयधीर्यंतिररक्षत्स हिडिंबकुटुंबस्य शोकोदयादारभ्यहिडिंबराक्षसहननात् आरभ्य प्रवीरजनानांकर्णिकामौक्तिकायमानाकर्ण भूषणमौक्ति
कवदाचरंतीभुजकीर्तिर्यस्यतस्य आत्मनःस्वस्यसंमुखीनं अभिमुखीभूयतिष्ठंतंदृढतरःपरिकरबंधःवस्त्रेणकटिबंधादिर्यस्य तंजरासंधंसमीरकुमारः
भीमःपंचदशादिनानिनियुध्य बाहुयुद्धंकृत्वा एषांपंचदशादिनानांयःतृतीयभागःपंचतेषांसंख्यानपदंपंचत्वं संख्येयेह्यादशत्रिषित्यमरात् पंचशब्द
स्यसंख्येयवाचकत्वं पंचत्वस्य संख्यावाचकत्वं तस्यअभिधेयेन अर्थेनमरणेन सहघटयांबभूव युयोज नयानेत्यर्थः॥ २॥ पद्यं॥तस्मिन्जरासंध

पद्यं॥हतेतस्मिंस्त्रयोदीप्ताहरिप्रस्थमुपाययुः आगामिनिमखेहव्यमादित्सवइवाग्नयः ३ कृष्णेगतेयदुपुरींक्षि
तिपानुजानांजित्वादिशःप्रतिनिवृत्तवतांचतुर्णां कोशेममुःपरमसिप्रवरागृहीतादोष्णोर्बलेनमहतानतुहेमपुंजाः४

हतेसति दीप्ताःदीप्तिमंतःत्रयःकृष्णार्जुनभीमाः आगामिनिभविष्यतिमखे राजसूये हव्यंहोमद्रव्यं आदित्सवःअग्नयःआहवनीयदक्षि-
णाग्नि गार्हपत्यनामानोवन्हयइव हरिप्रस्थं इंद्रप्रस्थं उपाययुः आजग्मुः अग्नयोपिदीप्ताःत्रयश्च॥ ३॥ कृष्णइति कृष्णेयदुपुरींद्वार
कांप्रतिगतेसति दिशःचतुर्दिशःजित्वा प्रतिनिवृत्तवतां प्रतिनिवृत्य आगतानां चतुर्णांक्षितिपस्य धर्मराजस्य अनुजानां भीमादीनां कनि
ष्ठबंधूनां महतादोष्णोः बाह्वोर्बलेनगृहीताःअसिवराः खड्गश्रेष्ठाःपरंकेवलं कोशे खड्गपिधाने भांडारगृहेच ममुः हेमपुंजास्तु नममुः
हेमपुंजाअपिबाहुबलेनगृहीताः॥ ४॥ ॥७॥ ॥७॥ ॥७॥ ॥७॥ ॥७॥

उपायनत्वेनेति सर्वैः भूपैः अखिलेषु वित्तेषु नृपाय धर्मराजाय उपायनत्वेन दत्तेषु सत्सु पार्थस्य धर्मराजस्य पुर्याः इंद्रप्रस्थनगर्याः क्षितिरेव वसुंधरा
वाचकस्य वसुंधरा शब्दस्य वाच्यभावं वसुधारणरूपाभिधेयत्वं भेजे दधे यावत्पृथिवीस्थं द्रव्यं उपायनत्वेनेंद्रप्रस्थे आगतमित्यर्थः ५ नरदेवमिति
आनकदुंदुभेः वसुदेवस्य कुमारः पुत्रः श्रीकृष्णः प्रतीच्याः दिशः जयेन कुलेन विस्मृतानीव वसूनि द्रव्याणि दधत् आनकानां पटहानां दुंदुभीनां च
निःस्वनैः द्यां दलयन् भिंदन् सन् नरदेवं धर्मराजं अगात् अगमत् ६ ततः हविः साक्षात् प्रत्यक्षं आदातुमिव आगतेन हरिणा कृष्णेन कृताअ

उपायनत्वेन नृपाय सर्वैर्दत्तेषु वित्तेष्वखिलेषु भूपैः पार्थस्य पुर्याः क्षितिरेव भेजे वसुंधरावाचकवाच्यभावं ५ नरदे
वमगाज्जयेप्रतीच्यानकुलेनवसूनि विस्मृतानि दधदानकदुंदुभिस्वनैर्द्यां दलयन्नानकदुंदुभेःकुमारः ६ हरिणा
सततः कृताभ्यनुज्ञो हविरादातुमिवागतेन साक्षात् क्रमविद्भिरथर्त्विजां समाजैः क्रतुमाहर्तुमुपक्रमं प्रचक्रे ७ प्राग्वंशे
ष्युत्तमे तिष्ठन् प्राग्वंशं पुनराविशत् कुरीरशिरसा पत्न्या कुरुवीरः सदीक्षितः ८

भ्यनुज्ञा यज्ञः क्रियतामिति आज्ञा यस्य सः धर्मरा
जः अथ क्रमविद्भिः यज्ञसंबंधिकर्मक्रमज्ञातृभिः ऋत्विजां समाजैः समूहैः सह क्रतुं राजसूययज्ञं आहर्तुं कर्तुं उपक्रमं प्रारंभं यज्ञपूर्वांगं प्रच
क्रे कृतवान् ७ प्राग्वंश इति दीक्षितः संजातयज्ञदीक्षः सः कुरुवीरः धर्मराजः कुरीरं यज्ञीयं मांगलिकवस्तु शिरसि यस्याः तया पत्न्या द्रौपद्या सह
उत्तमे प्राग्वंशे प्राचीनेवंशे कुले तिष्ठन्नपि पुनः प्राग्वंशं आविशत् इति विरोधः प्राग्वंशं यज्ञीयहविर्गेहात् प्राग्गृहमिति परिहारः ॥ ८ ॥ ॥ ७ ॥

अनलः अग्निः अत्रयज्ञे रुच्यं माधुर्यादिगुणविशिष्टं हविः आघ्रातुं भक्षितुं इच्छुः सन् आनीलं यत् धूमकुलं धूमसमूहः तस्यनिर्गमनं तस्मा दुद्दिर्गमनं तस्य अपदेशात् कपटात् पुराजग्धान् भक्षितान् गुरून् महतः गुरुत्वगुणविशिष्टांश्च अतः अजीर्णान् कुक्षौस्थितान् जतुनिकेतनस्य लाक्षागृहस्यभित्तिखंडानिव ववाम वमतिस्म नायंधूमसमूहः किंतु अजीर्णलाक्षागृहभित्तिखंडाः किमित्यपन्हुतिगर्भोत्प्रेक्षा अन्येनापिभक्षितं गुर्वन्नमजीर्णंभवति ९ तत्रयज्ञेप्रवर्ग्येणयज्ञीयकर्मविशेषेणजनितंधूमचक्रं धूममंडलंदिवि आकाशे आलक्ष्यतेस्म लोकैर्दृश्यतेस्म कथंभूतंधूम

आघ्रातुमिच्छुरनलोहविरत्ररुच्यमानीलधूमकुलनिर्गलनापदेशात् जग्धान्पुराजतुनिकेतनभित्तिखंडान्कुक्षिस्थितानि ववाम गुरूनजीर्णान् ९ तत्रप्रवर्ग्यजनितंदिविधूमचक्रमालक्ष्यतेस्मविबुधान्प्रतिपावकेन आनाकदुर्वहहविर्द्रविणे नवेगादाव्हानपत्रवलयंकिलनीयमानं १० मेदस्विनोविपुलखांडवभक्षणेनदेहंनिजंचलयितुंशिखिनोऽक्षमस्य उद्गम्य संज्वलितुमुत्तरवेदिकायामालंबनायकिलयूपवरोंतिकेभूत् ११

चक्रं आनाकंस्वर्गपर्यंतं दुर्वहं वोढुमशक्यं हविर्द्रविणं यस्यतेनपावकेन अग्निना विबुधान् देवान् प्रतिवेगात् नीयमानं आव्हानपत्राणांवलयंकिल कोशइवेत्युत्प्रेक्षा अन्योपिबहूनिपत्राणिवस्त्रकोशेसंबध्यनयति १० विपुलस्यखांडवस्य भक्षणेनमेदस्विनं मांसलंपुष्टमित्यर्थः निजंदेहंचलयितुं अक्षमस्य असमर्थस्यशिखिनः अग्नेः उद्गम्य उत्थाय संज्वलयितुं आलंबनायकिल आलंबनार्थमिव उत्तर वेदिकायां अंतिकेसमीपेयूपवरः यज्ञीयपशुबंधनार्थंनिरवातकाष्ठदंडश्रेष्ठः अन्योपिमांसलः उत्थातुं असमर्थोदंडमालंबते ॥ ११ ॥ ॥

चं·भा·
४

तदानीं अशेषाः देवाः अत्यद्भुतानां हविषां अत्यद्भुतैः हविर्भिः होमद्रव्यैः घृतादिभिस्तथैवतेनप्रकारेणैव नतृपुः तृप्ताः बभूवुः कलानांनाथःचंद्रः
बिसपुष्पबंधोः कमलबंधोः सूर्यस्यबिंबेन मंडलेनसंगं यथायेनप्रकारेण नविदध्यात् अयंभावः देवाः अमृतमयस्य चंद्रस्य कृष्णपक्षेनित्य
मेवैकांकलां भक्षयंतिनतः सर्वकलाक्षये अमावास्यांचंद्रस्य सूर्यस्यबिंबेनसंगोभवति पुनश्चतुष्टादेवाः शुक्लपक्षेकलावृद्धिंकुर्वंतीतिपौरा-
णिकाः तथाचराजसूययज्ञसंबंधिरुच्यंहविर्भक्षणेनातितृप्तैःदेवैः कृदभावात् कलानामभक्षितत्वेनसंपूर्णचंद्रस्यसत्वात्पूर्णिमायाःसंभवेन

बिंबेनसंगंबिसपुष्पबंधोर्नाथःकलानांनयथाविदध्यात् तथैवदेवास्तनृपुस्तदानीमत्यद्भुतानांह
विषामशेषाः॥ १२॥ सर्वेषुवर्णेष्वपिदातुरस्मात्संप्राप्तवत्स्वर्थमजातशत्रोः नवर्णएकस्तकदा
पिलेभेनार्थंक्रतूनामिहसार्वभौमे ॥ १३॥ ॥ ॥ ॥

अमावास्याकालिकसूर्यबिंबसंगश्चंद्रस्यनबभूवेति १२ इह अस्मिन्क्रतूनांसार्वभौमेश्रेष्ठेराजसूये अस्मात्दातुःअजातशत्रोःधर्मराजात् सर्वे
ष्वपिवर्णेषुब्राम्हणादिषु अक्षरेषुच अर्थंद्रव्यंअभिधेयंचसंप्राप्तवत्सुसत्सुएकःनवर्णस्तकदापिअर्थंनभेजेनप्राप इदमद्भुतमित्यर्थः अयंभावःयेनयेन
यद्यत्प्राचितंनृपेणनस्यतस्यतत्तद्दत्तंकस्यापिकदापिनास्तीतिनोक्तमतोनिषेधार्थकाव्ययनवर्णस्यार्थोनमिलित इति॥ १३॥ ॥६॥ ॥

टी·स·
४
४

॥१०॥ तत्रयज्ञोत्सवेनानाजनपदानांयेमेदिनीवल्लभमल्लाःभूपालश्रेष्ठाः तेषांमुकुटमणिकिरणैः पल्लवितेसंजातपल्लवइत्यर्थः यज्ञवाटेयज्ञमंडपेत्रि
पथापृथातनूजाभ्यांभीष्मधर्मराजाभ्यांनियुक्तः आज्ञप्तः सहदेवः विरलं पुमांसं पुराणपुरुषं श्रीकृष्णंसमासाद्य समीपमागत्य प्रथमं अर्घ्येणअर्घ्य
विशिष्टविधिनापरिपूजयांचक्रे कथंभूतः सहदेवः वैमात्रेयैः एकस्मिन्पितरिसतिभिन्नमातृजैः भ्रातृभिः भीमार्जुनधर्मराजैः जतुभवनवनसवनेषु
लाक्षागृहखांडवयज्ञेषुपृथक्पृथक् आराधिततयास्वेनापिआतिथ्याय आतिथ्यंकर्तुंनिमंत्र्यमाणेनवीतिहोत्रेणेववह्निनेवज्वलतादेदीप्यमानेन

॥ गद्यं ॥ तत्रनानाजनपदमेदिनीवल्लभमल्लमुकुटमणिकिरणपल्लवितेयज्ञवाटेत्रिपथापृथातनूजाभ्यांनियुक्तोवैमा
त्रेयैर्भ्रातृभिर्जतुभवनवनसवनेषुपृथक्पृथगाराधिततयास्वेनाप्यातिथ्यायनिमंत्र्यमाणेनवीतिहोत्रेणेवज्वलताहेमपात्रेण
परिष्क्रियमाणपाणितलः सहदेवोनिखिलभक्तजनकृत्यनिर्वाहभारेणनिभृतावयवंसभ्यलोकलोचनपक्ष्मयुग्मपंक्तिपरस्परवै
मुख्यवदान्यरूपकोमलिमानंमहर्षिजनवलयमध्यमहेंद्रनीलरत्नंविरलंपुमांसंसमासाद्यप्रथममर्घ्येणपरिपूजयांचक्रे॥ २॥

हेमपात्रेण सुवर्णमयपूजासाहित्यभाजनेनपरिष्क्रियमाणं भूष्यमाणं पाणितलंयस्यसः कथंभूतंविरलंपुमांसंनिखिलानांभक्तजनानांकृत्यस्ययोग-
क्षेमस्यनिर्वाहभारेणैवसंपादनभारेणैवनिभृतावयवंनम्रावयवं अन्योपिभारेणनम्रावयवोभवति तयासभ्यलोकलोचनानांपक्ष्मयुग्मपंक्त्योःपरस्पर
वैरमुख्यस्यअन्योन्यस्मादपसरणस्यवदान्यः दानशौंडः रूपकोमलिमाआकारसौंदर्यंयस्यतंसभ्याः निर्निमेषविकसितनयनाः संतोयंपश्यंतीत्यर्थः त-

चं·भा· या महर्षिजनानां वलयस्य मंडलस्य कटकस्य च मध्यं मध्यभागस्थं महेंद्रनीलरत्नं इंद्रनीलमणि ॥ ७ ॥ पद्यं ॥ यावत्कृष्णपूजां करोति तावत् तत्र सभा टी·स·
५ मंडपे वन्हिः वेदीभुवं विहाय त्यक्त्वा सकोपाद्धेतोः तरलः चंचलः अधरो यस्य तस्य प्रतिक्षितीशानानां शत्रुराजानां भयानकस्य भयंकरस्य चेदीशितुः चै ४
द्यस्य चित्तं प्रति आविवेशेव चित्ते कोपाग्निः प्रादुरभूदित्यर्थः ॥ १४ ॥ स नु अच्युतः कृष्णः सदसि सभायां शत्रोः चैद्यस्य परुषाक्षराणां मंडलेन समूहे
न यत् यस्मात् विकृतः कोपादिविकारवान् नाभूत् तत् तस्मात् बहुतराणि यानि कुंडलसंबंधिनीलरत्नानि तेषां लक्ष्यात् व्याजात् श्रवोभ्यां कर्णाभ्यां

प० तावत्सकोपात्तरलाधरस्य प्रतिक्षितीशानभयानकस्य वेदीभुवं तत्र विहाय वन्हिश्चेदीशितुश्चित्तमिवाविवेश ॥ १४ सदसि न
विकृतो यदच्युतोभूत्स तु परुषाक्षरमंडलेन शत्रोः बहिरवसदुपेत्य तच्छ्रवोभ्यां बहुतरकुंडलनीलरत्नलक्ष्यात् १५ अश्लीलवागि
हसमाप्तवतीनवर्तिसंद्रष्टुकाममिव दानववैरिचक्रं कल्पांततिग्मकरकल्पमनल्पवेगं कंठं बिभेद रणसीमनि दामघोषिं ॥ १६ ॥

बहिः उपेत्य आगत्य अवसत् अंतः स्थितश्चेत्कर्णविलेनांतः प्रविष्टपरुषाक्षरैः विकृतो भवेदेव यतो न विकृतो अतो कुंडलनीलरत्नकपटात् बहिरेव अ
वसदित्यनुमितमित्यर्थः ॥ १५ ॥ रणसीमनि दानववैरिणः कृष्णस्य चक्रं इह कंठे अश्लीलवाक् ग्राम्यवाणी समाप्तवती वर्तते न वा समाप्ता इति संद्रष्टु
काममिव दामघोषिं दमघोषपुत्रं शिशुपालं कंठे बिभेद द्विधा चकार कथंभूतं चक्रं ईषन्न्यूनः कल्पांततिग्मकरः कल्पांततिग्मकरकल्पं प्रलयकालि ५
कसूर्यसदृशं तथा अनल्पवेगं अतिजवं अनेन विशेषणेन यावदस्त्रं गृह्णाति तावत्कंठं बिभेदेति व्यज्यते ॥ १६ ॥ ॥ ७ ॥ ॥ ७ ॥

॥ गद्यं ॥ इति अनेनप्रकारेण दुर्मतेः तस्यशिशुपालस्य आयुषासह सवनकर्मणि यज्ञकर्मणि समापिते सति निर्मितं कृतं अवभृथाप्लवनं यज्ञांतस्नानं येन तं पौरवधर्मराजं अनुज्ञाप्य स्वस्यैगमने आज्ञां दापयित्वा चैद्यस्यनिधनोत्सवेन स्फुदर्शनस्येव स्वस्यपौरजनानां द्वारकावासिजनानां लोचनस्यापि आत्यभिप्रायेणैकवचनं नवास्रकणिकाभिः नवरक्तलवैः नवाश्रुलवैश्च आर्द्रतां अनुभावयितुं आर्द्रतायाः अनुभवं ग्राहयितुं मनोयस्य तथाभूतइवस

॥ गद्यं ॥ इतितस्य दुर्मतेरायुषासह समापितेसवनकर्मणि निर्मितावभृथाप्लवनमुपदात्वेन दत्तपूर्वाणि वित्तान्युत्तमर्णानिव पुनर्द्विगुणमेव ग्राहितान्सर्वानुर्वीपतीन् प्रस्थापितवंतं पौरवंतमनुज्ञाप्य चैद्यनिधनोत्सवेन स्फुदर्शनस्येव स्वपौरलोचनस्यापि नवास्रकणिकार्द्रतामनुभावयितुमनाइव सनातनः पुमान्पुरीं पुरानुभूतकुशस्थलीनाम्नीं प्रतस्थे ॥ ५ ॥ पद्यं ॥ अंधभूपतनयोपि बलौघैर्हास्तिनं पुरमवाप्य विलक्षः सौबलिं गिरमसौ बलवंतं दुर्विचाररचनास्फुटचचक्षे ॥ १७ ॥ ॥ ॥ ॥

नातनः पुमान् श्रीकृष्णः पुराअनुभूतकुशस्थलीतिनामयातां पुरीं द्वारकामित्यर्थः प्रतस्थे कथंभूतंपौरवं उपदात्वेन उपायनत्वेन दत्तपूर्वाणि पूर्वदत्तानि वित्तानि वस्त्राश्वकुंजरभूषणादीनि उत्तमर्णानिव वृत्त्यर्थं धनप्रयोक्तॄनिव पुनर्द्विगुणमेव ग्राहितान्सर्वान् उर्वीपतीन् नृपान् प्रस्थापितवंतं ॥ ५ ॥ प० असौ अंधभूपतनयोपि दुर्योधनोपि विलक्षः उद्विग्नः सन् बलौघैः सेनासमूहैः सह हास्तिनं पुरं अवाप्य दुर्विचाररचनास्फुबलवंतं बुद्धिबलवंतं सौबलिं सुबलापुत्रं शकुनिं गिरं चचक्षे उवाच ॥ १७ ॥ ॥

पांडवसंपत्तिदर्शनेनमनसिसंतापोजातइत्याह अग्नेरिति हेमातुल शकुने हेमसुवर्णं अग्नेःअपत्यंइतियत् आहुःएतत्मिथ्यान मयाविरोधिमरवे-
शत्रुकृतयज्ञे अनुभूतं श्रुतिरपि अग्नेरपत्यं प्रथमंसुवर्णमिति अनुभवं प्रकटयति तदिति यतःअखिलक्षितिपैःउपनीतं आनीतं तत्हेमस्मर्यमाणंस
त्इदंमेचित्तं नक्तंदिवंअहर्निशंदहति यतःचित्ते आनीतंसच्चित्तं दहति कारणगुणाः कार्येउपसंक्रामंतीतिन्यायाद्दाहशक्तिश्चापत्ये आगतातनस्त
दपत्यत्वं सुवर्णस्ययुक्तमितिभावः॥१८॥ द्रौपदीसभावलोकेसभाचमत्कारदर्शनेमणिभुविरत्नमयभूमौ स्खलितंजलेस्थलभ्रांत्यापतितंमांउच्चैः

अग्नेरपत्यमितिहेमयदाहुरेतन्मिथ्यानमातुलविरोधिमखेनुभूतं तत्स्मर्यमाणमखिलक्षितिपोपनीतंनक्तं
दिवंदहतिचित्तमिदंयतोमे॥१८॥वल्गत्कुचंपरिजहाससभावलोकेमांद्रौपदीमणिभुविस्खलितंयदुच्चैः॥
तत्साधुजातमितिवक्तुमिवस्नुषांस्वांमत्प्राणवायुरयमुत्क्रमणेच्छुरास्ते १९ ततः॥ अधुनायुधिसेनाभिर्विधूनानो
रसातलं निधायनिधनंतेषुनिगृण्हीयामिमांशुचं॥ २०॥

वल्गत् कुचंचलत्कुचंयथातथापरिजहासइतियत्तत् सा
धुजातमिति स्वांस्नुषां स्वपुत्रभीमभार्यांद्रौपदींप्रतिवक्तुमिव अयंमत्प्राणवायुःउत्क्रमणेच्छुःऊर्ध्वमार्गेणबहिर्गंतुमिच्छुःआस्ते द्रौपदीपरिहास
स्मरणेनमत्प्राणा व्याकुलीभवंतीतिभावः॥१९॥ इदानींस्वमतेनकर्तव्यमाह अधुनेति अधुनासेनाभिःधरातलंविधूनानःकंपयिताअहंयुधियु
द्धेतेषु पांडवेषुनिधनंमरणंनिधायस्थापयित्वा इमांतद्धामपरिहासस्मरणकृतांशुचंनिगृह्णीयांनाशयेयं॥ २०॥ ॥५॥ ॥५॥ ५

॥गद्यं॥ अभग्नः अपराजितः कैतवबंधः कपटस्वीकारो यस्य सः गांधारपतिः इति निगद्य उक्त्वा ग्रीडाव्ययानयोः संगमे निमग्नं एनं दुर्योधनं उत्तारयितुं ब
हिर्निष्कासयितुं एवं वक्ष्यमाणं उत्तरं प्रतिवचनं आदत्त उवाच इत्यर्थः ॥ ५॥ पद्यं॥ हे वत्स बाल अर्जुन तेजय्यतां जेतुं शक्यतां कयमुपैति प्राप्नोति यद्य
स्माद्युधिरखांडववनदाहकालिक युद्धे भयात् पलायिताः हरिमुखाः इंद्रादयः सुराः केवलं नामतः मरुतः नाभवन् अपितु वेगतोपि मरुतः अभवन्

॥गद्यं॥ इति निगद्य व्रीडाव्ययानयोः संगमे निमग्नमेनमभग्नकैतवबंधो गांधारपतिरुत्तारयितुमेवमुत्तरमादत्त
॥ ५ ॥ पद्यं ॥ जय्यतां कयमुपैति तेर्जुनो वत्स यद्युधि भयात्पलायिताः केवलं हरिमुखा न नामतो वेगतोपि मरु
तोऽभवन्सुराः ॥ २१ ॥ अपिच ॥ तं वीक्षितुं जगति शङ्कुरभूत्क एवा भीमं प्रकोपधृतभीमगदांकबाहुं एकैकमुष्टि
हतये समभवंति नालं यस्या हवे बकबृहद्रथभूहिडिंबाः ॥ २२ ॥

मरुतो पवनाः अमराः विबुधाः अमरः वायुतुल्यवेगेन पलायिता इत्यर्थः देवानामियमवस्था तत्र मनुष्याणां का कथेति भावः ॥ २१ ॥ प्रकोपेन धृता भीमा भयंक
रा गदा अंकः चिन्हं यस्य तथाभूतः बाहुर्यस्य तं भीमं वीक्षितुं अत्र अस्मिन् जगति के वा पुरुषाः शङ्कुः शन्का बभूवुः यस्य भीमस्य एकैकमुष्टेः हतये
प्रहाराय बकः बकासुरः बृहद्रथभूः जरासंधः हिडिबश्च एते अलं पर्याप्ताः न भवंति स्म न बभूवुः ॥ २२॥ ॥७॥ ॥७॥ ॥५॥

ताभ्यां भीमार्जुनाभ्यांउपास्यमानस्य सेव्यमानस्यतपस्यातनुजन्मनः धर्मराजस्यव्यापादद्रोहचिंतनेपिमादृशांमलदृशानां काप्रसक्तिः कःप्र
संगःरणेतुविशेषात् काप्रसक्तिः नास्त्येवेत्यर्थः ॥ २३ ॥ गद्यं ॥ तथापितज्जयेममाशक्ततायामपिअहंतु तवतेषां पांडवानांच परस्परस्यविभ
वेकोशरथतुरगादिसंपत्तोपरिणयनस्यममजयेत्वयालक्कोशोमह्यंदातव्यः तवजयेमयामत्कोशस्तुभ्यंदातव्यइत्यादिरूपस्यग्लहस्यपंथानं
अधिरोहति आगच्छति पस्तथाभूतेसतिजगतिसामान्यतांसाधारणतां अक्षममाणेनजगतिसर्वाधिकेनेत्यर्थः अक्षसंप्रदायेन अक्षक्रीडारीत्या



ताभ्यामुपास्यमानस्यतपस्यातनुजन्मनः व्यापादेपिप्रसक्तिःकाविशेषान्मादृशांरणे २३ गद्यं ॥ तथाप्यहंतुतवचतेषांप
रस्परस्यविभवेपरिणयनपथाधिरोहिणिक्षणादक्षममाणेनजगत्सामान्यतामक्षसंप्रदायेन तंपराजयघंटापथेसंचार
यिष्यामि ॥ ६ ॥ पद्यं ॥ वित्तेहृतेदरिद्रास्तेविसृष्टाबंधुभिःस्वयं विनाशं वासुवायायुर्विदेशंवायलज्जया ॥ २४ ॥ ॥

तं धर्मराजं क्षणात्पराजयस्य घंटापथेविस्तीर्णेच त्वरे संचारयिष्यामि अक्षक्रीडया धर्मं क्षणात्पराजयिष्य इतिभावः ॥ ६ ॥ पद्यं ॥ अनयारी
त्या तेषांवित्तेहृते अस्माभिःअपहृतेसतितेपांडवाः दरिद्राः अतः बंधुभिः स्वजनैःविसृष्टाः त्यक्ताः संतः स्वयमेवसुवावित्तादिशोकेनवाविनाशं
मरणंयायुः गच्छेयुः अथवालज्जयाविदेशंस्वजनरहितदेशंयायुः ॥ २४ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

ततः त्वं तु आत्मना संयुतैः सोदरैः बंधुभिः सदृशी संख्या यासां ताः समाः वर्षाणि शतसंवत्सरानित्यर्थः नीरराशयः समुद्रा एव हरिनीलाः इंद्रनीलमणयः तद्रूपा मेखला कांचिर्यस्यास्तां मेदिनीं भुवं निःसपत्नं यथा तथा स्फुरत्वं अनुभुंक्ष्व उपभुंक्ष्व ॥ २५ ॥ ग० इत्थंकारं अनेन प्रकारेण रहसि कल्पिते कैतवदुरध्वे अक्षक्रीडायां पणदुर्मार्गे तावुभावपि शकुनिदुर्योधनावपि अनुधावितुं पश्चाद्गंतुं प्रगमनं कर्तुं दिव्यचक्षुषा वस्तुतः-

त्वं ततस्त्वकस्फुरत्वमात्मसंयुतैः सोदरैः सदृशसंख्यकाः समाः नीरराशिहरिनीलमेखलां निःसपत्नमनुभुंक्ष्व मेदिनीं ॥ २५ ॥ गद्यं ॥ इत्थंकारं रहसि कल्पितकैतवदुरध्वे तावुभावप्यनुधावितुं दिव्यचक्षुषा तेनांधेन वसुंधराधिपतिना नवमणिमंडपिकाप्रवेशोत्सवव्याजादाहूतः सानुजो धर्मात्मजः कुरुपत्तनमुपेत्य बंधुतया प्रत्युद्गम्यमानो दुस्तरं भाविवनवासवर्षमेकैकमेकैकेन प्रणिपातपुण्येन सुप्रतरं करिष्यन्निव पितृव्यं द्वादशकृत्वः पदयोः प्राणंसीत् ॥ ७ ॥

अंधेन तेन धरापतिना धृतराष्ट्रेण नवमंडपिकायां प्रवेशोत्सवस्य व्याजात् आहूतः सानुजः भीमादिबंधुभिः सहितः धर्मात्मजः कुरुपत्तनं हास्तिनपुरं उपेत्य बंधुतया दुर्योधनादिबंधुसमूहैः प्रत्युद्गम्यमानः संमुखं गम्यमानः सन् पितृव्यं धृतराष्ट्रं पदयोः द्वादशकृत्वः द्वादशवारं प्राणंसीत् नमनं अकार्षीत् किं कुर्वन्निव दुस्तरं भावि एकैकं वनवासवर्षं एकैकप्रणिपातस्य एकैकनमस्कारस्य पुण्येन सुप्रतरं सुखेन तरितुं शक्यं करिष्यन्निव ॥ ७ ॥ ॥

प॰ अथसाद्रुपदसुतापिस्वस्यकबरींवेणीकृतकेशसमूहं सुबलजायाः गांधार्याः पदयोः समनीनमत् ननामचीकरत् कथंभूतांकबरीं नूतनैः अ
वभृथस्य यज्ञांतस्नानस्य अंबुकणैः उदकबिंदुभिरिव जालकस्य पामस्जनानपत्रेपुरितिराजपत्न्याः आच्छादकजालस्यमौक्तिकैः अधिगतां
प्राप्तांयुक्तामित्यर्थः॥ २६॥ धृतंआकारस्यकोपमत्सरादिजन्य देहविकारस्यनिगूहनंगोपनंयेनसः महीपः धृतराष्ट्रः विनीतंनम्रंतंधर्मराजंअ
नामयानुयुक्तेः आरोग्यप्रश्नस्य अनुजाभिः कनिष्ठभगिनीभिः अनामयप्रश्नानंतरंसुताभिरित्यर्थः क्रतुलाभस्यराजसूयलाभस्यलालनाभिःस्तु

प॰ अवभृथांबुकणैरिवनूतनैरधिगतामयमौक्तिकजालकैः स्वकबरींद्रुपदस्यसुतापिसासुबलजापदयोःसमनीनमत्
२६ अनुजाभिरनामयानुयुक्तैरभिनंद्यक्रतुलाभलालनाभिः सदनायससर्जतंविनीतंसधृताकारनिगूहनोमहीपः २७
तावन्मदीयतनुभेदिभटांतहेतुर्वैरंमिथःप्रभवितांकुरुभूभुजांश्वः इत्यंतराहितशुचेवदिशिप्रतीच्यांमंदायमानमहसारवि
णानिपेते॥ २८॥

निभिः कृत्वा अभिनंद्य आनंदयित्वा सदनायसदनंप्रतिगंतुं ससर्जमुमोच आज्ञापयामासेत्यर्थः॥ २७॥-
यावत् सदनायविसृष्टः तावत् तस्मिन्समयेममसूर्यस्येयंमदीयायातनुः तस्याः भेदिनांभटानांयोधानां अंतहेतुः कारणंवैरं कुरुभूभुजांकौरव-
पांडवानांमिथःपरस्परंश्वःप्रभवितांप्रभविष्यति इति अंतःमनसि आहितयास्थापितयाशुचेवशोकेनेवेत्युत्प्रेक्षा मंदायमानं महःतेजोयस्य ते ८
नरविणाप्रतीच्यांदिशिनिपेते निपतितं अन्योपिशरीरनाशचिंतयाहीनकांतिःसन् भूमौनिपतति॥ २८॥ ॥ ५॥ ॥ ५॥

दिशापदिशश्चत्वरे दिग्विदिशां अंगणे सांद्रैः संतमसैः सर्वतो विद्यमानतमोभिः दिग्धे लिप्ते सति तदा सर्वाः प्रजाः दृशा नेत्रेण राज्ञः तुलां साम्यं समा-
रुक्षन् प्रापुः राजवत् प्रजा अंधा बभूवुरित्यर्थः ॥ २९ ॥ तं क्षणमेव तस्मिन् क्षणे एव प्रथमशैलं उदयाचलं रोहंते तथाभूताः अमृतांशोः चंद्रस्य भानवः
किरणाः पुनः मनुजावलीनयनवर्त्मने मनुष्यनेत्राणां मार्गं कर्तुं मघवादिदेवानां ममभावगोचराः ममत्वविषयाः ककुभः पूर्वादिदिशाः विभेजुः ॥ ३०

दिग्धे संतमसैः सांद्रैर्दिशापदिशचत्वरे सर्वाः प्रजास्तदा राज्ञः समारुक्षन्दृशा तुलां ॥ २९ ॥ मनुजावलीनय
नवर्त्मने पुनर्मघवादिदेवममभावगोचराः ककुभो विभेजुरमृतांशुभानवः क्षणमेव तं प्रथमशैलरोहिणः ॥
३० ॥ अथापकार्यामधितिष्ठतोऽस्य संदर्शनायानिशमापतद्भिः अशेषपौरैरतिबालमित्रैरशेषि किंचिन्नतया
रजन्या ॥ ३१ ॥ धर्मजन्मा ततः कर्म निर्माय अहर्मुखोचितं सभां सभास्वरां पौरैर्भूयः प्रापाक्षवेदिभिः ॥ ३२ ॥

उपकार्यां राजगृहमधितिष्ठतः प्राप्तवतोऽस्य राज्ञः पृथक्त्वेन दर्शनाय अनिशं निरंतरं आपतद्भिः इतस्ततः आगच्छद्भिः अतिबालमित्रैः अशेषपौरैः
समस्तपुरवासिभिः तया रजन्या किंचित् न अशेषि न अवशिष्टं भावे लुङ् रात्रौ पौरसन्मानपरेण राज्ञा निद्रावकाशो न लब्ध इति भावः ३१ ततः प्रातःकाले
सः धर्मजन्मा अहर्मुखे प्रातःकाले उचितं कर्म स्नानसंध्यावंदनादि निर्माय कृत्वा अक्षवेदिभिः द्यूतकोविदैः पौरैः भासुरां शोभमानां सभां भूयः पुनः प्राप ॥ ३२ ॥

ग० तत्रसभायांविचित्रोपमाणेषु आश्चर्यंकुर्वत्सुअनल्पानाचारिण्णाचाकृत्वानाजल्पाकेषुवाचालेषुबहुसौंदर्यंदर्शयत्सुइतियावत् सभायाःशिल्पेषु स
भानिर्माणकर्तृशिल्पिजनकौशलेषुदृशंपरिकल्पयतःददतःप्रज्ञादृशःधृतराष्ट्रस्यनिकषासमीपेमूर्तेतृतीयगुणेइवतमोगुणेइववदिविषद्दृषभनी
लदृषदासनेइंद्रनीलरत्नासनेनिषीदतःआसीनस्यअमुष्यकुरुकुलप्रदीपस्यधर्मराजस्यप्रतीपं पश्चात्तथानिविशमानःआसीनःशकुनिःप्रासंगि
केनप्रस्तुतकर्तव्यपर्यवसितोक्तिकौशलेनपश्चाद्दुरोदरविहारेद्यूतक्रीडायांअवतारंकर्तव्यतामित्यर्थःअचिरात् शीघ्रंअभिरोचयामास रुचिमुत्पादया



ग० तत्रविचित्रोपमाणेष्वनल्पचारिमजल्पाकेषुसभाशिल्पेषुदृशंपरिकल्पयतःप्रज्ञादृशःनिकषामूर्तेतृतीयगुणइवदिविषद्
षभनीलदृषदासनेनिषीदतोमुष्यकुरुकुलप्रदीपस्यप्रतीपंनिविशमानःशकुनिःस्थानात्भ्रंशयितुंसाक्षात्कृतसन्निधिर
मध्यमवर्णयातदीयाभिख्ययावाच्यइवग्रहविशेषःप्रासंगिकेनपश्चाद्दुरोदरविहारेवतारमचिरादभिरोचयामास ८५० अथ
सदसिमहत्याज्ञयासौनियत्याःस्मृतिमपिविमुह्यद्यूतमार्गप्रवृत्तं बहुषुजनपदेषुप्राप्तवत्सुग्लहत्वंसपदिसुबलसूनुर्धर्मसूनुं
विजिग्ये २२

मास कथंभूतःशकुनिःस्थानात्सार्वभौमपदात्भ्रंशयितुंसाक्षात्प्रत्यक्षंकृतसन्निधिःसमीपमागतःनविद्यतेमध्यमवर्णोयस्यांतया
तदीयाख्ययाशकुनिनाम्नावाच्यःग्रहविशेषइवशनिरिवेत्यर्थःशकुनिरितिनाम्निमध्यमकुवर्णत्यागे शनिरित्यवशिष्यते पदात्भ्रंशयितुंसाक्षात्शनिः ९
प्रातिकूल्येनस्थितःकिमित्युत्प्रेक्षा ८५० अथमहत्यांसदसिसभायांअसौसुबलसूनुःशकुनिःस्मृतिमपिनियत्याःदैवस्यआज्ञयाकृत्वाविमुह्यमोहंप्राप्य

द्यूतमार्गेमवृत्तं धर्मसूनुं बहुषुजनपदेषुदेशेषुग्लहत्वंपणत्वंप्रामुवत्सःसत्सःसपदिग्लहत्वकालेएवविजिग्येजयतिस्मेत्यर्थः ग्लहगतपदार्थदेशादी-
न्धर्मराजात्जग्राहेतिभावः॥ ३४॥ सःबलभूः शकुनिः एकेन अक्षेणपाशकेनइंद्रियेणचनृपतेःसर्वविषयान्देशान्शब्दस्पर्शादींश्चयुगपत् एक
कालावच्छेदेनगृहीतुं अशक्नोत्शक्तोबभूवेतियावत् अस्मात्एकेनाक्षेणसर्वविषयग्रहणात्परं अन्यत्जगतिपरमं अद्भुतवाच्यकायलोकविल
क्षणसंज्ञायेवाच्यतया अर्थतया अभ्युपेत्यस्वीकृत्यतिष्ठेतकिंनुनैवतिष्ठेतेत्यर्थः एकेनाक्षेणइंद्रियेणश्रोत्रादिनाएकस्यविषयस्यशब्दादेर्ग्र

एकेनपत्सःबलभूर्युगपत्गृहीतुमक्षेणसर्वविषयान्नृपतेरशक्नोत् अस्मात्परंजगतिवाच्यतयाभ्युपेत्य
तिष्ठेतकिंनुपरमाद्भुतवाचकाय ३४ मतिदेवनमेवमेवभूषाःमचुरान्रत्नमयांश्चहेमकोशान् सहजान्
सहजायपयास्यजित्वासतुगांधारपतिर्जगर्जहर्षात् ३५ ॥ ॥ ॥ ॥

हणं लोकेविद्यते अत्रतु एकेनाक्षेण सर्वविषयाणां यौगपद्येनग्रहणंदृष्टमितिश्लेषेणाद्भुतत्वं परिकल्प्य अस्मादन्यालोकेद्भुतासंज्ञातदर्थश्च
अस्तिकिमिति प्रश्नव्याजेननास्तीत्यर्थ वैचित्र्यं मतिपाद्यते॥ ३४॥ मतिदेवनंमतिक्रीडायामेव एकयाक्रीडयासर्वदेशवदेव अस्यधर्मराजस्य-
भूषाः कटककुंडलादिभूषणानिमचुरान् बहून् रत्नमयान्हेमकोशांश्चजायया द्रौपद्यासहसहजान् भीमादिबंधूंश्चजित्वासः गांधारपतिःश
कुनिरुच्चैःहर्षात् जगर्जजितंजितमितिउच्चैः शब्दंचकार॥ ३५॥ ॥ ७॥ ॥ ७॥ ॥ ७॥ ॥ ७॥

तत्रांतरे तस्मिन्समये बहूनां पतीनां वधूटी युवतिः जायेत्यर्थः द्रुपदजा नः अस्माकं घटीचेटीघटेन जलानयनकर्त्री दासी अभूत् वराकीं दीनां तां द्रौपदीं अत्र अस्यां परिषदि सभायां आनयइति अग्रजस्य ज्येष्ठबंधोः दुर्योधनस्य गिरं आज्ञावचनं हरन् गृण्हन् सुबलतनयासूनुषु गांधारीपुत्रेषु द्वैतीयीकः द्वितीयः दुःशासनः जवात् समुत्तस्थौ उदतिष्ठत् कइव धरणिं पृथिवीं अवतीर्णः आगतः साक्षात् यमइवेत्युत्प्रेक्षा॥ ३६॥ बलात् दाकृष्यनयनार्थमागतं दुःशासनं दृष्ट्वाभियाभीत्या सदसि सभायां धावनं पलायनं आचरंत्याः कुर्वंत्या आनतांग्याः कुचादिभारेणनताव

तत्रांतरे॥ घटीचेटीनोभूद्बहुपतिवधूटी द्रुपदजा वराकीं तामत्रानय परिषदीत्यग्रजगिरं हरन्द्वैतेयीकः सुबलतनयासूनुषु जवात्समुत्तस्थौ साक्षाद्धरणिमवतीर्णो यमइव॥ ३६॥ दृष्ट्वाभियासदसि धावनमाचरंत्याः कैश्येचकार सकरांगुलिमानतांग्याः वक्षोरुहेषु च महीपपुरंध्रिवर्गो नासाग्रसीम्नि सुधियश्च नदीसुताद्याः॥ ३७॥

यवायाः द्रौपद्याः कैश्ये केशसमूहे दुःशासनः करांगुलिं हस्तांगुलिं चकार करांगुलिभिः केशपाशे जग्राहेत्यर्थः तथा महीपानां राज्ञां पुरंध्रिवर्गः वधूसमूहः वक्षोरुहेषु कुचेषु करांगुलिं चक्रुः दुःखाद् अंगुलिभिः हृदयताडनं चक्रुः तथा नदीसुताद्याः भीष्माद्याः सुधियः ज्ञातारः नासाग्रसी-
म्नि नासाग्रे अंगुलिं चक्रुः समीचीनं नजातं कोयं दैवयोग इति चिंतया नासाग्रे करांगुलिं चक्रुः॥ ३७॥ ॥५२॥ ॥५२॥

तत्रसभायां दुर्मेधाः दुर्बुद्धिः दुःशासनः तस्याः द्रौपद्याः पातिव्रत्यलक्ष्म्याः निवासस्यस्थितिस्थलस्यस्फटिकप्राकारमिव दुकूलमपिसूक्ष्मश्वेतपरिधा
नवस्त्रमपि अपहर्तुमावर्तत कथंभूतायाःतस्याः बलवतः आकर्षणात्भयंतस्मात्उद्भिदुराणिबहिर्निर्गच्छंतिस्वेदपृषंतीव घर्मबिंदवइवेत्यु
त्प्रेक्षा भूषामुक्ताफलानिधारयंत्याः तथाचिकुरभारात्केशसमूहात्सकाशात्करतलनिष्पीडनेननिर्गलितां अधःक्षरितांकालिम्नःश्यामतायाः धा
रामिवनिर्भरंनिबिडंयत्कुवलयगर्भकमाल्यंनीलोत्पलानांकेशमध्यस्थमालातस्याःरसझरीं अश्रुभिःनेत्रोदकैःसहवर्षंत्याः १५० तादृक्षेतादृशे अनि

ग० तत्रसदुर्मेधाःबलवदाकर्षणभयोद्भिदुराणिस्वेदपृषंतीवभूषामुक्ताफलानिधारयंत्याश्चिकुरभारात्करतलनिष्पीडननिर्गलि
तांकालिमधारामिवनिर्भरकुवलयगर्भकमाल्यरसझरीमश्रुभिःसहवर्षंत्यास्तस्याःपातिव्रत्यलक्ष्मीनिवासस्फटिकप्राकारमिवदु
कूलमप्यपहर्तुमावर्तत १५० तादृक्षेसमुपस्थितेपरिभवेसभ्येषुवाचंयमेष्वाध्यायत्सुविधेर्बलंस्वदयितेष्वन्येष्वशक्तेष्वपि निश्चिता
निमतांगतिंयदुपतिंनीव्यांकरौकुर्वतीसाचक्रंदतमुच्चैःयदुपतेत्रायस्वमामिति ३८ वाच्येपरिभवेसमुपस्थितेसतिसभ्येषुभीष्मद्रोणा
दिषुवाचंयमेषुमौनिषुसत्सुस्वदयितेषुभीमादिषुविधेःदैवस्यबलंआध्यायत्सुचिंतयत्सुसत्सुअन्येषुउक्तव्यतिरिक्तेषुजनेषुअशक्तेषुतस्याःआप-
न्निवारणेअसमर्थेषुसत्स्वपिसाद्रौपदीनीव्यांपरिधानवस्त्रेकरौकुर्वतीस्थापयंतीसतीयदुपतिंश्रीकृष्णं भर्तिमतांपीडितानांगतिंपीडानिवारकंनिश्चित्यहे
कृष्णासायदुपतेमांत्रायस्वरक्षेतिउच्चैःउच्चस्वरेणचक्रंद आर्तशब्दंचकार एतत्समयेएतदापन्निवारकःश्रीकृष्णंविनान्योवास्तीतिनिश्चित्यलज्जारक्षणार्थं

तमुच्चकैः आजुहावेत्यर्थः॥ ३८॥ सभायांतस्याः तन्व्याः कृशांग्याः द्रौपद्याः ह्रियमाणवस्त्रात् नितंबात् कटिपश्चाद्भागात् दुकूलपंक्तिः सूक्ष्मशुभ्र
वस्त्रसमूहः सहसा अकस्मात् आविरासीत् प्रादुर्बभूव शुभ्रतयानंततयाच वस्त्रपंक्तिमुत्प्रेक्षते कंसारेः श्रीकृष्णस्यपः कारुण्यपयःपयोधिः क्षु
पाक्षीरसमुद्रः तस्य कल्लोलमालेवमहालहरीपरंपरेव॥ ३९॥ वरांग्याः सुंदर्याः वाससिवस्त्रे हृतेसतिहृद्यरूपंमनोहरं वासोंतरं अन्यत् वासः
वद्द्यधर्द्धिंमापेतियत् तेनैववासोंतर वर्धनेनैव तत्रसभायांकस्यनरस्यचित्तस्यनव्यः नूतनः चित्रकूटः आश्चर्यराशिः तन्नामापर्वतश्चनअजनि



तस्याःसभायांह्रियमाणवस्त्रातन्व्यानितंबात्सहसाविरासीत् कंसारिकारुण्यपयःपयोधेःकल्लोलमालेव दुकूलपंक्तिः
॥३९॥ हृतेहृतेवाससिहृद्यरूपंवासोंतरंयद्वृधेवरांग्याः नरस्यतेनैवनकस्यतत्रचित्तस्यनव्योजनिचित्रकूटः ४० अद
ृश्यस्यापहारेपिवर्धितानेकवाससः अंबरप्रायतातस्यामध्यस्योभयथाप्यभूत्॥ ४१॥ ॥ ॥

नजातः अपितुसर्वस्यजातः प्राचीन एकश्चित्रकूटोवर्तते अयमपरोजातइत्यर्थांतरंश्लेषेण ४० अदृश्यस्य अतिसूक्ष्मस्य अपहारेपिवस्त्राणामप
हारेसत्यपिवर्धितानिवृद्धिंनापितानि अनेकवासांसियेनतस्यतस्याः द्रौपद्याः मध्यमस्यमध्यभागस्यउभयथापिउभयप्रकारेणापि अंबरप्रायताप्राये- ११
णबाहुल्येन अंबरे अंबरप्रापः तत्ता बहुवस्त्रोत्पत्तेः वस्त्ररूपता सूक्ष्मत्वादाकाशरूपताच अभूदित्यर्थः॥ ४१॥ ॥ ५७॥ ॥ ६८॥

अंधसूनुः दुःशासनस्तेन तस्याः द्रौपद्याः चैलानि वस्त्राणि कर्षन् अपहरन् सन् अनग्ना नग्ना वस्त्ररहिता क्रियते अनेन सः नग्नंकरणः आढ्यसु-
भगस्थूल पलित नग्नांधेतिकरणे ख्युन्प्रत्ययः नग्नीकरणोत्पादनं नाभूत् श्रीकृष्णाकृपया वस्त्रप्रादुर्भावेन द्रौपद्याः नग्नीकरणाभावाद्वस्त्रा-
पहारश्रमेण स्खलनं प्राप्य भूमौ पतन् दुःशासनः जनान् हासयामास हासाद्दंतवाससो रोष्ठयोर्विवृतत्वेन दंतावलेर्नग्नीकरणसमर्थोभूदित्यर्थः
॥४२॥ प० अथ तथाभूतः तेन प्रकारेण जातः पुरुषः कठिनः यो योषाभिषंगः भार्यापराभवः तस्मात् यो रोषः तेन कलुषः आविलः तेन पृषदश्वज

चैलानि कर्षंश्चिरमंधसूनुस्तस्यास्तु नग्नंकरणः सना भूत् श्रमात्स्खलित्वा धरणौ पतन्सन्दंतावलेरेव जनव्रजानां
॥४२॥ ग० अय तथाभूतपरुषयोषाभिषंगरोषकलुषेण पृषदश्वजनुषा परिषदि भीषणमेवं बभाषे १० प० उरसि स्खलदूष्मलं
मृगाक्ष्याः समितावस्रमिदं यथाहमक्ष्णा द्विषतः कचकर्षणोप्यमुष्या रसनेनानुभवेयमेवमेव ॥ ४३॥ ॥ ॥

नुषा वायुपुत्रेण भीमेन परिषदि सभायां एवं वक्ष्यमाणं वचनं बभाषे उक्तं ॥१०॥ प० अहं समितौ सभायां उरसि स्खलत् यत्तत् उष्मलं दुःखजत्वादुष्णं
मृगाक्ष्याः द्रौपद्याः अस्रं नेत्राश्रु अक्ष्णा नेत्रेण अनुभवामि पश्यामि एवमेव अमुष्याः कचकर्षिणः केशाकर्षणकर्तुः द्विषतः शत्रोः दुःशासनस्यापि उ-
रसि स्खलत् बहिः पतत् उष्मलं अस्रं रक्तं समितौ युद्धे रसनेन रसनेंद्रियेण अनुभवेयं आस्वादयेयं ॥४३॥ ॥६७॥ ॥६७॥

ग॰ किंच हेमंतइव अहं सरसीव सरोवरे इषविलसद्भिः कबंधैः जलैः मस्तकरहितदेहैश्च बंधुरे व्याप्ते समराजिरे रणांगणे तामरसस्य कमलस्य छदानीव पत्राणीव शतमपि एतान्विमतान् शत्रून् दुर्योधनादीन् धार्तराष्ट्राणां हंसानां धृतराष्ट्रपुत्राणांच शब्दः वाचकः नामेति यावत् शेषो यस्याः सकाशात्तां महागदस्य महारोगस्य महागदायाश्च आपत्तिं तत्कृतविपत्तिं गमयिष्यामि रणांगणे दुःशासनस्य हृदयं भित्वा रक्तं पास्यामि दुर्योधनादिशतबंधून्हनिष्यामि चेति प्रतिज्ञांच क्र इतिभावः तत्र सूत्राम्णः इंद्रस्य पुत्रोप्येवं वक्ष्यमाणं प्रतिजज्ञे प्रतिज्ञांचक्रे ॥१॥ प॰ असौ राधासूनुः कर्णः सदसि उत्सेकात् गर्वात् पलतः ग्राम्यं

गद्यं ॥ किंचसरसीव विचलत्कबंधबंधुरे समराजिरे तामरसच्छदानीव शतमपि विमतानेतान्हेमंतइवाहं धार्तराष्ट्रशब्दशेषां महागदाप
त्तिं गमयिष्यामीति तत्र सूत्राम्णः पुत्रोप्येवं प्रतिजज्ञे ११ प॰ उत्सेकात्कृतहस्ततालममुना गांधारपुत्रीभुवा राधासूनुरसौ जहास सदसि ग्राम्यं
ब्रुवन् पलतः यस्यां जात्वपि देहिनोभ्युदितता नैवाभिनिर्मुक्तता स्यात्तां ह्यपि गांडिवी मम तुलां निद्राममुं नेष्यति ४६

अश्लीलंभाषणं ब्रुवन् अमुना गांधारपुत्रीभुवा दुर्योधनेन सह कृतः हस्ततालो हस्तताडनं यस्मिन्कर्मणि यथा तथा जहास मम गांडीवक्त अमुं कर्णं यस्यां निद्रायां जात्वपि कदाचिदपि अभ्युदितता अभिनिर्मुक्तता च हि अपि एतद्दोषद्वयमपि न स्यात्तां तां निद्रां दीर्घनिद्रां मरणमिति यावत् नेष्यति अमुमपराधकारिणं कर्णं रणांगणे हनिष्यामीति प्रतिज्ञां चक्रे इति भावः यायोः सुप्तयोः सूर्योस्तमेति उदेति च तौ क्रमात् अभिनिर्मुक्तता दोषवान् अभ्युदितता दोषवांश्च भवतः सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च अंशुमानभिनिर्मुक्ताभ्युदितौ च यथाक्रममित्यमरः ॥४६॥ ॥६॥ ॥६॥ १२

॥ग०॥ इतितयोः भीमार्जुनयोः तादृशेन वीर वादेन युष्मच्छासने हं शक्त इतिवादेन स्फरवं यथातथा इह आस्व निषीद इति उक्त्वा करास्फालेन हस्तताडने
न दर्शिते सक्थिनि ऊरौ एव तव मृत्युः स्यादिति सुयोधनं प्रतियाज्ञसेन्याः द्रौपद्याः शापेन च यद्भयं तेन आत्तगंधाभ्यां पराभूताभ्यां अंधदंपतिभ्यां गांधारी
धृतराष्ट्राभ्यां यथापुरं यथापूर्वं राज्यं प्रसर्प्य हि इंद्रप्रस्थं प्रतिप्रस्थापितो युधिष्ठिरः पुनरपि कृतमंत्रैः अमित्रैः शकुनिकर्णदुर्योधनादिभिः शत्रुभिः आ
हूतमात्रः अयं युधिष्ठिरः अर्धपथात् अर्धमार्गात् विधिना दुर्दैवेन गलहस्तिकया अर्धचंद्राकाराग्रहस्तगलप्रहारेण निवर्तित इवेत्युत्प्रेक्षा तामेव सभां

ग० इतितयोस्तादृशेन वीरवादेन स्फरवमिहास्वेति करास्फालितदर्शिते निजसक्थिन्येव तव मृत्युः स्यादिति सुयोधनं प्रतियाज्ञ
सेन्याः शापेन भयात्तगंधाभ्यामंधदंपतिभ्यां यथापुरं राज्यं प्रसर्प्य हि इंद्रप्रस्थं प्रतिस्थापितो युधिष्ठिरः पुनरपि कृतमंत्रैरमित्रैरा
हूतमात्रोयमर्धपथाद्विधिना गलहस्तिकया निवर्तित इव तामेव सभां प्रत्यावर्तत ॥ १२ ॥ पद्यं ॥ भूताभिविष्ट इव बोधवतां वरो
ऽपि भूयोपि धर्मतनयः सहसौबलेन आधत्त देवनविहारमनार्यजुष्टमाद्यक्षरं विजहदेव पणोपि सोभूत् ॥ ४५ ॥ ॥

प्रत्यावर्तत पुनरागच्छत् १२ ॥ पद्यं ॥ बोधवतां ज्ञानिनां मध्ये वरोपि धर्मतनयः भूताभिविष्ट इव पिशाचप्रविष्ट इव सन् सौबलेन शकुनिना सह भूयोपि
अनार्यैः नीचैः जुष्टं सेवितं देवनविहारं पाशकक्रीडां आदत्त जग्राह सः देवनविहारः आद्यक्षरं प्रथमाक्षरं विजहत् त्यजन् सन् पणोपि अभूत् अस्यां क्री
डायां यस्य पराजयः तेन द्वादशवर्षाणि वनवासः कर्तव्य इति पणो भूदित्यर्थः ॥ ४५ ॥ ॥ ६ ॥ ॥ ७ ॥ ॥ ७ ॥

कितवेद्यूतकृतिशकुनौस्वेनकरेणवशं वदान् अनुकूलान् पाशकान्किरतिक्षिपतिसतिविजयेनसदापुरस्कृतोपि अग्रतःकृतोपिसः धर्मराजः तेनवि
जयेनपृष्ठतःकृतः अभवत् इदमद्भुतं विजयेन अर्जुनेनपुरस्कृतोपिविजयेनपृष्ठतःकृतःपराजितोभूदित्यर्थः॥४६॥ अथपराजयानंतरं सत्यसंधः सत्यप्र
तिज्ञः क्षितींद्रः धर्मराजः प्रत्यर्थिभिः स्वीकृतायां अस्यां धरणौ क्षणमपिस्थातुं नयुक्तमितिमनस्यानीय उत्थाय अंतः अंतःकरणे अतितरां उत्तप्यमानां
दुःखेनतप्तां प्रसूवंमातरं कुंतीं देवुः देवरस्य विदुरस्य पाणौ हस्तेविधायतत्समीपेस्थापयित्वेत्यर्थः सजानिः जायया द्रौपद्यासहितः सन् सहजैः बंधुभिः स

कितवेशकुनौवशंवदान्किरतिस्वेनकरेणपाशकान् विजयेनसदापुरस्कृतोप्यभवत्तेनसपृष्ठतःकृतः ४६ उत्थायाथ
क्षितींद्रःक्षणमपिधरणौस्थातुमस्यांनयुक्तंप्रत्यर्थिस्वीकृतायामितिसहसहजैःसत्यसंधःसजानिः पाणौदेवुर्निधाय
प्रसूवमतितरामंतरुत्तप्यमानांपद्भ्यांप्रापद्वनानिव्यथितहृदमुचन्पौरलोकस्तदृग्भ्यां ॥ ४७ ॥ ॥ ॥

हपद्भ्यांवनानि अरण्यानिप्रापत् व्यथितहृत् दुःखमनाः पौरलोकस्तदृग्भ्यां वनानिजलानि अमुचत् त्यजत् यद्यपिप्रसूवमित्यत्र ओःसुपीतियणा
भाव्यं तथापिप्रकृष्टंसूतेसौप्रसूरितिसूतेसौसूः प्रकृष्टासूः प्रसूरितिचविग्रहेप्रशब्दस्यकर्षतेरन्वयेनसूतिंप्रत्यन्वयाभावात् गतित्वाभावेनगतिकारकेतर
पूर्वपदस्ययण्नेष्यतइतिभाष्यकारेष्ट्यायणाभावः यत्क्रियायुक्ताः प्रादयस्तंप्रत्येवगत्युपसर्गसंज्ञाइतिनियमात् ॥ ४७ ॥ ॥७॥ ॥७॥ १२

कांतार वर्त्मनि अरण्यदुर्गममार्गे धनुर्विशिष्टस्यापितूणीरविशिष्टस्यापिशांताकृतेः तस्य धर्मराजस्य पुरतः निषण्णाः आसीनाः मृगाः उत्थाय पटुमर्म-
रैः मनोहर वस्त्रशब्दैः चारुचीरं वल्कलं रोमंथेन चर्वितस्य तृणादेः आकृष्य पुनश्चर्वणे लोलं चंचलं चुबुकं अधोभागो यस्य तेन मुखेन जघ्नुः आघ्राणं चक्रुः
शांताकृतिं दृष्ट्वा निःशंकांतःकरणतया मृगाः विश्वासेन वल्कलमाजघ्नुरित्यर्थः॥४८॥ परागैः धूलिभिः पूर्णे पथि मनोज्ञाः मनोहराः तस्य धर्मराजस्य
पादरेखात्मकघटस्य प्रतिमाः घटाकाररेखामुद्राः वनदेवताभिः भक्त्या उपनीताः पाद्यार्थं पादप्रक्षालनार्थं उदकुंभा इव उदकपूर्णघटा इव जाग्रतिस्मेति

कांतारसीमनि मृगाः पुरतो निषण्णाः शांताकृतेः सधनुषोपि निषंगिणोपि उत्थाय तस्य पटुमर्मरचारुचीरं रोमंथलोलचिबु
केन मुखेन जघ्नुः॥४८॥ परागपूर्णे पथि तस्य पादरेखाघटस्य प्रतिमा मनोज्ञाः भक्त्योपनीता वनदेवताभिः पाद्योदकुंभा
इव जाग्रतिस्म ५९ग० क्रमेण ते विलंघ्य विविधानि विपिनानि जन्हुमुनिकर्णशष्कुलीपयवशेन शिक्षितैर्गतिविशेषैरिव गाम्भी
र्यैरावर्तैरूपासकजनादाहृतानि संसारचक्राणीव दर्शयंतीं कोकनदवदनोदितै रिव कोककुटुंबिनीकूजितैः कुमारस्य देवव्रतस्य
कुशलमिव पृच्छंतीं भागीरथीं पुरस्कृत्य तां निशीथिनीं पश्चाच्चक्रुः १४
ष्ठंतिस्म स्वस्थान वनमागतस्य महासाधोर्धर्मराजस्य पादप्रक्षाल
नार्थमानीता उदकुंभा इवेत्युत्प्रेक्षा॥४९॥ ग० ते पांडवाः विविधानि विपिनानि क्रमेण उल्लंघ्य भागीरथीं पुरस्कृत्य अग्रतः कृत्वा तत्र तत्तीरे तां निशीथिनीं-
रात्रिं पश्चाच्चक्रुः यापयामासुः कथंभूतां भागीरथीं जन्हुमुनेः जन्हुसंज्ञकराजर्षेः कर्णशष्कुलीपयवशेन कर्णबिलमार्गेण बहिर्निर्गमनवशात याशिक्षि

तैः अभ्यस्तैः गतिविशेषैरिव गभीरैः आवर्तैः अंभोभ्रमैः कूलात् उपासकजनात् आहृतानि आनी तानि संसारचक्राणीव दर्शयंती तथा कोकनदानि रक्तोत्पलान्येव वदनानि तैः उदितैः उक्तैः रिव कोककुटुंबिनीनां कूजितैः कुमारस्य पुत्रस्य देवव्रतस्य भीष्मस्य कुशलं पृच्छंतीमिव अत्र भगीरथरथा नुगमनमाचरंत्याः मार्गे जन्हुराजप्रवृत्तयज्ञवेदीं प्लावयंत्याः तपोबलेन पीतायाः भागीरथ्याः भगीरथयाञ्चाप्रसन्नेन तेन कर्णबिलमार्गेण मोच नं कृतमिति कथानुसंधेया ॥१४॥ अपरेद्युः द्वितीयदिवसे अतिमात्रं बुभुक्षितानां अनुयात्रिकाणां अनुयायिनां सत्रिजनानां यज्ञसंबंधिऋत्विगादि

॥ गद्यं ॥ अपरेद्युरतिमात्रबुभुक्षितानुयात्रिकसत्रिजनपरित्राणाय पवित्रैः स्तोत्रैः प्रसेदुषा चित्रभानुना दत्तमक्षय्य मन्नपात्रमादाय कलत्रे निदधुः ॥१५॥ पद्यं ॥ वनं ततः काम्यकमेत्य तेषु वसत्सु भीमस्तु नियोद्धुकामं किर्मीरमुग्रं कुणपाशनेंद्रं क्षिप्रं तदाहारदशामनैषीत् ॥५०॥ ॥ ॥ ॥ ॥

जनानां परित्राणाय रक्षणाय पवित्रैः स्तोत्रैः स्तुतिभिः प्रसेदुषा प्रसन्नेन चित्रभानुना सूर्येण दत्तं अक्षय्यं भक्ष्यपदार्थप्रसवितृ अन्नपात्रं आ दाय कलत्रे भार्यायां द्रौपद्यां निदधुः स्थापयामासुः ॥१५॥ पद्यं ततः तेषु पांडवेषु काम्यकं वनं एत्य वसत्सु सत्सु भीमस्तु नियोद्धुकामं बाहुयुद्ध करणे इच्छावंतं उग्रं किर्मीरनामानं कुणपाशनानां शवभक्षकाणां राक्षसानां इंद्रं नायकं क्षिप्रं शीघ्रं तस्य राक्षसस्य आहारदशां भक्ष्यदशां शवा वस्थामित्यर्थः अनैषीत् नीतवान् तं जघानेति भावः ॥५०॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥

ततः कदध्वनि दुर्मार्गे अलसतां अभजन्यालस्यं अबुध्वा अज्ञात्वा वध्वा द्रौपद्या सार्द्धं द्वैतवने चरन् गच्छन् सः भूपः धर्मराजः मुनींद्रसंघात् सर्वस्य शुभस्य
पुण्यस्य मूलानि कारणानि मूलानि वृक्षाणां वल्लीनां च भक्ष्यमूलानि जग्राह अतिथित्वेन प्राप्ताय दत्तानि मूलानि जग्राहेति भावः ॥५१॥ अथ तत्र द्वैतवने
ते पांडवाः सत्यवतीसुतस्य व्यासस्य पादारविंदात् प्रविसृत्वरीभिः प्रसरणशीलाभिः नखप्रभाभिः कृत्वा जटालतानां नवां नूतनां पुष्पपंक्तिं जनयां ब

ततश्चरन्द्वैतवने ससार्द्धं वध्वा कदध्वालसतामबुध्वा मूलानि सर्वस्य शुभस्य भूपो मूलानि जग्राह मुनींद्रसंघात्
॥ ५१ ॥ तत्राथ ते सत्यवतीसुतस्य पादारविंदात्प्रविसृत्वरीभिः नखप्रभाभिर्नवपुष्पपंक्तिं जटालतानां जनयां
बभूवुः ॥ ५२ ॥ तस्मिन्कवौ तापसयूथनाथे स्वातीमिवाजग्मुषि वासभूमिं तेषामतिक्षामतया सुतानां शुचा
क्षिदेशेष्वतिवृष्टिरासीत् ॥ ५३ ॥ ॥ ॥ ॥ ॥ ॥ ॥

भूवुः उत्पादयामासुः नमने व्यासचरणयोर्मस्तकं स्थापयामासुरिति भावः ॥५२॥ तापसयूथनाथे तस्मिन्कवौ पुराणादिकर्तरि व्यासे शुक्रे च स्वातीं स्वातीन
क्षत्रमिव वासभूमिं निवासस्थानं आजग्मुषि आगतवति सति अतिक्षामतया अतिकार्श्येन दुर्भिक्षेण च पुतानां तेषां पांडवानां शुचा शोकेन अक्षिदेशेषु अ
तिवृष्टिः आसीत् आपन्निवारकं आप्तजनं दृष्ट्वा शोकेन रुरुदुरित्यर्थः शुक्रे स्वातीनक्षत्रमागतवति अतिवृष्टिर्भवतीति ज्योतिर्ग्रंथे प्रसिद्धं ॥ ५३ ॥ ॥

तदानींदीर्घदर्शी भविष्यज्ज्ञः व्यासः प्रसृमरया प्रसरणशीलया तनुभासा श्यामया शरीरकांत्या दिशि दिशि प्रावृषेण्यान् प्रावृट्कालिकान् सजलानिस्य
र्थः मेघान् विदधानः कुर्वाणः सः व्यासः कुरुराजवाचक कुरवः वृक्षवाचक कुरवइतिमहांतं शब्दं संज्ञां आविभ्रतोपितान् पांडवान् स्ववचनानां निपुणि-
म्ना कौशलेन अशोकान् शोकरहितान् अशोकवृक्षांश्च अकार्षीत् वृक्षपक्षे आश्चर्यं॥ ५४॥ पार्थः अर्जुनः अस्मान् व्यासात् प्रतिश्रुतिरिति एतत्संज्ञांवि
द्यां विधानसहितमंत्रं प्रतिपद्य प्राप्य धर्मतनयेन आलिंग्य विसृज्यमानः आज्ञप्तः सन्नित्यर्थः कृपाजलधेः शंभोः चरणयोः अर्चनाभिः पूजाद्युपासना

प्रसृमरतनुभासा प्रावृषेण्यान्स मेघान् दिशि दिशि विदधानो दीर्घदर्शी तदानीं कुरव इति महांतं शब्दमाबिभ्रतोपि स्व
वचननिपुणिम्ना तानशोकानकार्षीत्॥ ५४॥ अस्मात्प्रतिश्रुतिरिति प्रतिपद्य विद्यामालिंग्य धर्मतनयेन विसृज्यमानः॥
पार्थो हिमाचलमगात्परमास्त्वमाप्तुं शंभोः कृपाजलनिधेश्चरणार्चनाभिः॥ ५५॥ यस्मिन्हिमानीभृति यक्षवृंदमंगेषु स
र्वेष्वपि मंजुलेषु नखंपचोष्णं नलिनेक्षणानामुरोजमेवातितरामुपास्ते॥ ५६॥ ॥ ॥ ॥

भिः परमास्त्वं प्राप्नुपतास्त्रं आप्तुं प्राप्तुं हिमाचलं अगात् अगमत्॥ ५५॥ हिमानीभृति हिमसंहति धारके यस्मिन्हिमाचले यक्षाणां वृंदं नलिनेक्षणा
नां सुंदरस्त्रीणां सर्वेष्वपि अंगेषु अवयवेषु मंजुलेषु सुंदरेषु सत्सु नखंपचं नखपाचकं उष्णं यस्मिन्तं उरोजमेव स्तनमेव अतितरां उपास्ते सेवते पर्व
ते शैत्यबाहुल्यात् स्वभावतः स्त्रीणां कुचाधार हृदयेषु उष्णता सत्वात्तान्येव भेजुरिति भावः॥ ५६॥ ॥ ७॥ ॥ ८॥

पः हिमालयः वसुंधरायाः पृथिव्याः वत्सतां एत्य प्राप्य निपीतान् रत्नावलीनां कांतिपूरान् तृष्या अतितृष्या मनःशिलायाः वप्रस्य तटस्य झरीमिषेण-
निर्झरमिषेण दरीमुखैः गुहामुखैः उद्गिरतीव वमतीव अन्योपि पयसादिपदार्थातिभक्षणेन वमति पृथुराजेन यदा गोरूपा पृथिवी दुग्धा तदा पर्वतैः
हिमालयं वत्सं कृत्वा रत्नानि दुग्धानीति पुराणेतिहासोनुसंधेयः॥ ५७॥ समीरकिशोरकः मंदवायुः तं हिमालयं तरसा वेगेन आरोहन् ऊर्ध्वं गच्छन् तः त
स्य अर्जुनस्य स्वेदजलानां अणुराजिं कणिकासमूहं निपीय प्राश्य आननपद्मस्य मुखकमलस्य माध्व्याः मकरंदस्य द्विरेफभावं भृंगत्वं प्रकटीचकार स-

यो वत्सतामेत्य वसुंधराया निपीतरत्नावलिकांतिपूरान् मनःशिलावप्रझरीमिषेण दरीमुखैरुद्गिरतीव तृष्या॥ ५७॥ आ
रोहतस्तं तरसा समीरकिशोरकः स्वेदजलाणुराजिं निपीय तस्याननपद्ममाध्वीद्विरेफभावं प्रकटीचकार॥ ५८॥ शिवाख्य
योरेकतनुत्वकारणं त्रिलोकपित्रोर्महसोस्तपोवनं मिथोर्च्यमानं मिथुनैस्तपस्विनां तथेच्छुभिस्तत्र न नाम पांडवः॥ ५९

मीरभृंगः मुखकमलस्य स्वेदमकरंदं पपाविव्यर्थः मंदवायुः स्वेदमपजहारेति भावः यथा भ्रमरपदे द्विरेफत्वं तथा समीरकिशोरपदेप्यस्तीति द्विरेफत्वं-
मंदवायोरिति कवेरभिप्रायः॥ ५८॥ पांडवः अर्जुनः तत्र हिमालये तपोवनं न नाम कीदृशं तपोवनं शिवश्च शिवा च शिवौ आख्ये नाम्नी ययोस्तयोः त्रिलो
कस्य पित्रोः मातापितरयोः महसोः उमामहेश्वरयोरित्यर्थः एकतनुत्वस्य कारणं तथा मिथः स्त्रीपुरुषयोर्मध्ये परस्परं तथेच्छुभिः उमामहेश्वरवत् एक
तनुत्वमिच्छद्भिः तपस्विनां मिथुनैः स्त्रीपुरुषैः अर्च्यमानं सेव्यमानं विशेषणाभ्यां वनस्य महासिद्धिस्थानत्वमुच्यते॥ ५९॥ ॥७॥ ॥७

तत्रवने सन्निधास्यन् सन्निधिंप्राप्स्यन् यः ऋषभः हरवृषभः तदर्थं उपदामिव उपायनमिव दर्भदलमुष्टिंआहरन् गृण्हन् अर्जुनः चित्तं ईशस्य प
दयोः समादधन् सन् दुश्चरं तपः तप्तुं कर्तुमित्यर्थः आरभत ॥ ६० ॥ तपस्थितेः विशेषविधौ विशेषाचरणे चतुरः कुशलः सः अर्जुनः शत्रुजिते भुवः
तले अखिलेन सर्वांशेन निजं चरणं विधातुं स्थापयितुं जुगुप्समान इव तद्विषयकं तिरस्कारं कुर्वन्निव प्रपदेन पादाग्रेण तिष्ठतिस्म भूतले पा

तत्रदर्भदलमुष्टिमाहरन्सन्निधास्यदृषभोपदामिव चित्तमीशपदयोः समादधत्तपुमारभतदुश्चरं तपः ६०
चतुरस्तपस्थितिविशेषविधौचरणंविधातुमखिलेननिजं सजुगुप्समानइवशत्रुजितेप्रपदेनतिष्ठतिभुवस्स
तले ॥ ६१ ॥ भानोर्ललाटंतपभानुजालेप्रविष्टदृष्टिंपरितस्तमग्निः भूयोपिभोक्तुंविपिनंदिशेतिप्रेम्णो
परुन्धन्निवदृश्यतेस्म ॥ ६२ ॥ ॥ ॥ ॥ ॥ ॥ ॥

दाग्रेण तिष्ठन् तपश्चकारेतिभावः ॥ ६१ ॥ ललाटंतपं ललाटतापकं भानुजालं किरणसमूहो यस्य तस्मिन् भानौ सूर्ये प्रविष्टदृष्टिं स्थापितचक्षु
षं तं अर्जुनं परितः तस्या समंतात् भागे अग्निः भूयोपि पुनरपि विपिनं खांडववनं भोक्तुं दिशदेहि इति वदन् प्रेम्णा स्नेहेन उपरुंधन् गतिरोध पू
र्वकाग्रहं कुर्वन्निव दृश्यतेस्म दृष्टो लोकैरितिशेषः अनयोस्त्रेक्षया पंचाग्नितपश्चर्यां चकारेति द्योत्यते ॥ ६२ ॥ ॥ ६२ ॥ ॥ ६२ ॥ १६

फलपत्रजलानिलानां अशनानि देहनिर्वाहार्थं भक्षणानि क्रमशः प्रविहाय उत्तरोत्तर भक्ष्यस्वीकार पूर्वक पूर्वत्यागं कृत्वा तपस्यतः तपः कुर्वतः अस्य वि
जयस्य अर्जुनस्य अक्षगणः इंद्रियवर्गः रुद्राक्षसमूहश्च विषयेषु शब्दस्पर्शादिषु लोलतां सतृष्णातां न प्रपेदे न प्राप अपितु कराग्रे एव लोलतां चंचलतां प्र
पेदे विषयेषु निरिच्छः सन् अक्षमालया मंत्रजपं चकारेति भावः ॥ ६३॥ सः वासविः अर्जुनः तदा तपोविधौ पंचाग्नितपोविधाने पावकेन अग्निना धनंजय
त्वेन पक्षांधवं बंधुत्वं स्वजनत्वमिति यावत् तस्मात् वेष्टितः बभूवेति गम्योत्प्रेक्षा बभूव किमित्यर्थः अंग हे भो भवान् वैरिणं मच्छत्रुं तं अंगराजं कर्णं अजीज

फलपत्रजलानिलाशनानि प्रविहाय क्रमशस्तपस्यतोस्य विषयेषु न लोलतां प्रपेदे विजयस्याक्षगणः कराग्र एव ६३ तपोविधौ
स पावकेन सर्वदिक्षु वास्तविस्तदा बभूव वेष्टितो धनंजयत्वबांधवात् अजीजनत्त्वमंगराजमंग वैरिणं भवानितीव रोषितो दिनेश एव
चक्षुरक्षिपत् ६४ पाराशरिप्रापितमंत्रभागो राधयन् शंकरमंतरंगे सप्तापि च र्षीस्तपसा विजेतुं सप्तत्वमापस्वयमेक एव ॥ ६५

नत् उत्पादितवान् इति हेतोः इव रोषितः रोषं प्राप्तः सन् दिनेशः एव सूर्य एव चक्षुः अक्षिपत् अन्योपि शत्रुपितरं सरोषं पश्यति ॥ ६४॥ पाराशरिणा व्यासे
न प्रापितेः उपदिष्टे मंत्रभागे अंतरंगे अंतःकरणे शंकरं आराधयन् सः अर्जुनः स्वयं एक एव सन् तपसा सप्तापि ऋषीन् वसिष्ठादीन् विजेतुं सप्तत्वं सप्त
संख्यावैशिष्ट्यं आपेत्याश्चर्यं सप्ताभिः जटाभिः सहितः सप्तः तत्त्वमिति तत्परिहारः सप्ताः सप्ताश्च नु न्यारुणाकिरणनिभाः पातु विभ्रमस्त्रिनेत्र इत्यत्र
सप्तापदस्य जटावाचकत्वं दृश्यते ॥ ६५॥ ॥ ६७॥ ॥ ६७॥ ॥ ६७॥ ॥ ६७॥ ॥ ६

चं·भा· मघोनः इंद्रस्य तनयः पुत्रः अर्जुनः तत्तादृशेन अतिदुष्करेणेत्यर्थः तपसा तरुणेंदुमौलिं शिवं कृपापरवशं कृपाधीनं तन्वन् कुर्वन् सन् फलानि उपरि टीका

१७ तन फलानि लिप्सुरिव ग्रहीतुमिच्छुरिव उपरि ऊर्ध्वदेशे बाहुं उद्यम्य धरणौ पादाग्रमेव प्रविधाय कृत्वा तस्थौ अन्योपि उच्चदेशस्थ फलानि ग्रहीतुं ४

पादाग्रेणातिष्ठन् बाहुमुत्क्षिपति ॥ ६६ ॥ वायुं प्राणवायुं निरुध्य निभृतं अत्यंतं तपस्यतः अस्य अर्जुनस्य शिरसः सकाशात् समुत्थिता दशदिक्षु वि

तत्तादृशेन तपसा तरुणेंदुमौलिं कुर्वन्कृपापरवशं तनयो मघोनः पादाग्रमेव धरणौ प्रविधाय तस्थावुद्यम्य बाहुमुप
रीव फलानि लिप्सुः ॥ ६६ ॥ निरुध्य वायुं निभृतं तपस्यतः शिरः समुत्था दशदिग्विसृत्वरी नटत्स्फुलिंगा नवधूमसंततिः
स्फुटीचकारास्य धनंजयाभिधां ॥ ६७ ॥ तस्याथ नारदमुखात्तपसः प्रभावं श्रुत्वा हरस्त्रिजगतामधिपो दयालुः देव्या
दृशा सदसि सूचिततद्दिदृक्षो दित्सन्नभीष्टमपि लुब्धकतामयासीत् ॥ ६८ ॥ ॥ ॥ ॥

सृत्वरी प्रसरणशीला नटंतः इतस्ततो गच्छंतः स्फुलिंगाः यस्यां सा नवा धूमसंततिः धूमपरंपरा धनंजय इति अभिधां नाम स्फुटीचकार अन्वर्थां च-
कार ॥ ६७ ॥ अथ सदसि सभायां नारदमुखात् तस्य अर्जुनस्य तपसः प्रभावसामर्थ्यं श्रुत्वा दयालुः देव्या पार्वत्या दृशा नेत्रव्यापारेण सूचिता तस्य अर्जुन १७
स्य दिदृक्षा दर्शनेच्छा यस्य सः हरः अभीष्टं तन्मनोगतं फलं दित्सन् अपि दातुमिच्छन्नपि लुब्धकतां लोभयत्तां किराततत्वं च अयासीत् प्रापत् ॥ ६८ ॥ ॥

किरातवेषधारणं स्वनिकटस्थपदार्थैः सफलं जातमित्याह हेरंबेति हेरंबस्य गजाननस्य गंडयोर्मदपंकः तस्य विशेषकः तिलकः अंकः चिन्हं य-योस्तौ स्कंदस्य औपवाह्यशिखी वाहनमयूरः तस्य पिंछैः बर्हैः विलासचूडे लीलाकिरीटौ ययोस्तौ भूषानद्याः शिरोभूषणनद्याः भागीरथ्याः तटरुहाणां तीरस्थवृक्षाणां छदैः पत्रैः कॢप्तानि कृतानि वस्त्राणि याभ्यां तौ कोदंडिनौ धनुर्धरौ कुहनाकिरातौ किराती च किरातश्च किरातौ कुहनया मायया किरातौ व्यरुचतां अशोभेतां ॥ ६९ ॥ शाबरत्वं जुषते भजते सौ शाबरत्वजुट् तस्य वरस्य श्रेष्ठस्य पुंसः शिवस्य शशिखंडात् पदात् शकारसं

हेरंबगंडमदपंकविशेषकांकौ स्कंदौपवाह्यशिखिपिञ्छविलासचूडौ भूषानदीतटतरुच्छदकॢप्तवस्त्रौ कोदंडिनौ व्यरुचतां कुहनाकिरातौ ॥ ६९ ॥ शाबरत्वजुषो वरस्य पुंसः शशिखंडान्नु शकारसंविधानं भजति स्म तदा शिखंडभावं भगवन्मस्तकभूषणं यदेषः ॥ ७० ॥

विधानं नु शकारयोगः किमु कुत एतदिति चेत् तदा शाबरत्वधारणसमये भगवतः शिवस्य मस्तकभूषणं एषः शशिखंडः शिखंडभावं अवशिष्टशिखंडत्वं भजते धारयति अयं भावः सदाशिवस्य वरपुरुषस्वरूपं आसीत् तदा मस्तके शशिखंड आसीत् यदा शबररूपं तदा मस्तके शिखंडो मयूरपिञ्छमासीत् तस्मात् बवयोरभेदात् वरपुरुषेण भगवता यदा शाबरत्वं स्वीकृतं तदा मस्तकभूषणशशिखंडात् वरपदस्य शकारयोगेन शबर इति संज्ञा जाता मस्तकभूषणस्य अवशिष्टशिखंड इति संज्ञा जातेति ॥ ७० ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥

॥गद्यं॥ तदानीमेवकिरातरूपधारणसमयेएवरजतगिरिशिखरात् कैलासशिखरात् निर्गच्छंतौकिमेतदितिसांशयिकैरपिकिरातरूपमवलो
क्यकिमर्थमेतत्कृतं इमौ अस्मत्प्रभू वानवेत्यादिसंशयाविष्टैरपितयोः अनुसरणेसेवार्थपश्चाद्गमनविषयेउचितवेषविरचनायां आकुलैःप्रमथैः



॥गद्यं॥ तदानीमेवरजतगिरिशिखरान्निर्गच्छंतौकिमेतदितिसांशयिकैरपितदनुसरणोचितवेषविरचनाकुलैःप्रमथ
कुलैःपरिवार्यमाणौसमुच्चलितलांगूलमितस्ततोधावद्भिर्दूरचारश्रमविदारितवदनलंबायमानरसनाग्रपालिनीभिःसृ
णिकाकणिकाभिर्वनपद्धतिंसुद्धतरींकुर्वद्भिर्द्रुततरश्वसितकंपमानावयवैस्तेषुतेषुवनगुल्मिषुश्वापदानन्विष्यान्विष्य
हुंकारमाचरद्भिर्विश्वनिगमविश्वकद्रुभिरविमुच्यमानपार्श्वभागौदीपकमृगायमाणनिजहरिणाशावकानुधाव्यमानपार्श्व
भागौप्रशमिततुहिनगिरिजडिमोद्वेगेनभाविनिपदेपदेवनदेवताभिरर्प्यमाणस्फुरतरुप्रसूनास्तरणेनहिमवतःकटकप
थेनसविलाससंचरमाणौकावेतावदृष्टपूर्वौवनमस्मदीयमाक्रमतइतिरोषकषायिततयानिवारयितुकामैरपितेजोविशेष
प्रतिहतोत्साहैरारण्यैरन्यैःशबरयुवभिःकेवलमालोक्यमानौजटावल्लरीमूलमुकुलीभवदंजलिभिस्तपस्विपुंजैर्नभसिवि
मानवेगंनिरुध्यहर्षाश्रुभिःसममभिवृष्यमाणजयशब्दौतौजगदादिमौदंपतीसविनयमुपासीनस्यशुनासीरसुतस्यतपो
वनसीमानंशनैःशनैरासीदतां॥१६॥ प्रमथकुलैःप्रमथगणसमूहैःपरिवार्यमाणौतौजगतःआदिमौकारणभूतौदंपतीउमामहेश्वरौसवि

१८

नयं उपासीनस्य उपासनां कुर्वतः शुनासीरसुतस्य अर्जुनस्य तपोवनसीमानं शनैः शनैः आसीदतां प्रापतुः कथंभूतौ दंपती समुच्चलितानि लांगूल
निपुच्छानि यस्मिन्कर्मणि यथातथा इतस्ततो धावद्भिः दूरचारेण दूरगमनेन यः श्रमः तेन विदारितेषु प्रसारितेषु वदनेषु लंबमानाः रसनाः जिह्वाः
तासां अग्रेभ्यः पतंति तन्द्रीलाभिः सृणिकानां लालानां कणिकाभिः बिंदुभिः वनपद्धतिं वनमार्गं सुन्दतरीं कुर्वद्भिः द्रुततरेण श्वसितेन कंपमानाः
अवयवाः येषां तैः तेषु तेषु वनगुल्मिषु वनगुल्मविशिष्टस्थलेषु श्वापदान् शशमृगादीन् अन्विष्यान्विष्य मृगित्वा मृगित्वा हुंकारं आचरद्भिः कुर्व-
द्भिः विश्वनिगमाः समस्तवेदा एव विश्वक द्रवः मृगयाकुशलश्वानः तैः अविमुच्यमानाः मुक्ताः पार्श्वभागाः ययोस्तौ तथा दीपकमृगः दीपकं वदने
गृहीत्वा गमनकर्ता लघुपराक्रमस्तद्वदाचरन् यः निजहारिणशावकः तेन अनुधाव्यमानः पार्श्वभागः ययोस्तौ तथा प्रशमितः तुहिनगिरेः हिमाचल
स्य जडिम्नः शैत्यात् उद्वेगो भयं येन तेन वेगेन अर्थात् वनदेवतासंबंधिनेति ज्ञेयं भाविनि पदे पदे पदनिक्षेपस्य स्थले स्थले वनदेवताभिः अर्प्य
माणं विरच्यमानं सुरतरुप्रसूनानां कल्पवृक्षपुष्पाणां आस्तारं यस्मिन्तेन हिमवतः कटकपथेन सविलासं यथा तथा संचरमाणौ तथा कौ एतौ पूर्वदृ
ष्टौ दृष्टपूर्वौ तथा न भवतः अदृष्टपूर्वौ अस्मदीयं वनं आक्रमतः इति मनस्यानीयरोषकषायितनतपाकोपकलुषितनतया निवारयितुकामैरपि तेजोवि-
शेषेण प्रतिहतः उत्साहः निवारणोद्यो गो येषां तैः अन्यैः शबरयुवभिः तरुणशबरैः केवलं आलोक्यमानौ तथा जटावल्लर्याः जटालतायाः मूले
मुकुलीभवंतः कुड्मलीभवंतः अंजलयो येषां तैः तपस्विनां तपसा स्वर्गप्राप्तानां सिद्धानां पुंजैः समूहैः नभसि विमानवेगं निरुध्य हर्षाम्बुभिः सप्रंभ
मिवृष्यमाणाः विकीर्यमाणौ जयइतिशब्दः ययोस्तौ ॥१६॥ ॥५॥ ॥५॥ ॥५॥ ॥५॥

तत्रखलु ॥ प॰ आपादंपादपर्यंतं लंबंते आपादलंबिन्यः जटाः यस्यतं आतपमात्रं सूर्यकिरणमात्रं भक्षयतितयाभूतं सूर्येदृष्टिंनिधायोष्यासहमित्यर्थः ऊर्ध्वीभवन् भुजोयस्यतं उदारेणमहता तपसाकृशांगं कुरुषुवीरं मुनींद्रंराजर्षिश्रेष्टं एनं अर्जुनं दृष्ट्वा कृपादृष्ट्या अनुगृह्य अनुग्रहं कृत्वाकृपापात्रंकृत्वेत्यर्थः भवान्याः सुतवत्सलतात्रेधात्रिविधाबभूव पूर्वंहेरंबकार्तिकेयसुतयोर्भवान्याः वत्सलताद्वेधा आसीत् इदानीमेतादृशमर्जुनंदृष्ट्वासुतवदस्मिन्वत्सलताजातेतित्रेधाबभूवेत्यर्थः ॥ ७१ ॥ खुरपातैः पादाग्रताडनैः महीं क्षोदयन् चूर्णीकुर्वन् कोपेनकुटिलः रौद्रः कोपिवनकोलः वनवरा

तत्रखलु ॥ प॰ आपादलंबिजटमातपमात्रभक्ष्यमूर्ध्वीभवद्भुजमुदारतपःकृशांगं दृष्ट्वानुगृह्यकुरुवीरमुनींद्रमेनंत्रेधाबभूवसु तवत्सलताभवान्याः ७१ क्षोदयन्नपिमहींखुरपातैःकोपिकोपकुटिलोवनकोलः घोरघूत्करणघोणमुपागात्कुक्षिमाश्रमभुवः कुरुसूनोः ॥ ७२ ॥ तंविलक्ष्यरौद्रवपुषंमृगशावकेषुत्रासाद्विशत्सुकटिलंबितवल्कभागान् पर्याकुलेकलकलैरपिपक्षिजालेपार्थोनिवृत्यनियमाज्जगृहेशरासं ॥ ७३ ॥

होपिशबरसमुच्चयार्थमपिशब्दः कुरुसूनोः अर्जुनस्य आश्रमभुवः कुक्षिं अभ्यंतरभागंघोरं घूत्करणं यस्याः सा घोणानासिका यस्मिन्कर्मणि यथातथा उपागात् उपागमत् ॥ ७२ ॥ रौद्रं भयकरं वपुः शरीरं यस्य तं वनवराहं वीक्ष्य मृगाणां शावकेषु कटेः सकाशात् लंबितान् वल्कभागान् वल्कलभागान् प्रतिविशत्सु प्रविशत्सु सत्सु पक्षिजाले पक्षिसमूहे पिकलकलैः शब्दैः पर्याकुले संभ्रमाद्व्यग्रे सति पार्थः नियमात् निवृत्य समाधेर्व्युत्थाय शरासं धनुः जगृहे स्वीकृतवान् ॥ ७३ ॥ ॥ ५ ॥ ॥ ६

मुखरासशब्दाज्यालता यस्य सः एषः मुनिः अर्जुनः जिघांसुः हंतुमिच्छुः सन् जवात् वराहं यदा अभ्ययात् अभिमुखमगच्छत् तदा धनुः आरु
ह्य अनुयायिवर्गैः सेवकसमूहैः सह अभिधावन् वराहाभिमुखं धावन् शबरः ददृशे दृष्टः लोकैरिति शेषः ॥७४॥ सः अर्जुनः मया अनुद्रुते अ
नुधाविते अस्मिन्वराहे बाणं मामुंच हे जाल्म अविचारिन् मूर्ख अपेहि निवर्तस्व इति किराननेतुः शबरनायकस्य मनसः लक्ष्यं न कुर्वन् सन् वराहं
अस्त्रस्य बाणस्य लक्ष्यं चकार तद्वचस्यनादरं कृत्वा वराहे बाणं मुमोचेत्यर्थः ॥७५॥ तदा युगपत् समुज्झिताभ्यां मुक्ताभ्यां शिवसव्यसाचिनोः

मुनिरेष यदाभ्ययाद्वराहं मुखरज्यालतिको जवाज्जिघांसुः शबरो ददृशे तदाभिधावन् धनुराकृष्य सहानुयायिवर्गैः
॥७४॥ मामुंच बाणं मदनुद्रुतेस्मिन्नपेहि जाल्मेति किराननेतुः वचः सलक्ष्यं मनसो न कुर्वन् वराहमस्त्रस्य चकार लक्ष्यं
॥७५॥ शिलीमुखाभ्यां शिवसव्यसाचिनोः समुज्झिताभ्यां युगपत् किटेस्तदा समं विभज्यायुरभुज्यत क्षणं सहोदरा
भ्यामिव पैतृकं धनं ॥७६॥ गद्यं॥ ततः कुपितोपि कुरुप्रवीरस्तपःशांततया नातिपरुषमुवाच ॥१७॥ ॥

शिवार्जुनयोः शिलीमुखाभ्यां बाणाभ्यां क्षणात् किटेः वराहस्य आयुः समं विभज्य अभुज्यत भक्षितं अपहृतमित्यर्थः काभ्यां किमिव सोदरा
भ्यां सोदर्यबंधुभ्यां पैतृकं पितृसंपादितं धनमिव यथा सोदराभ्यां पैतृकं धनं समं विभज्य भुज्यते तद्वत् उभयोर्बाणप्रहाराभ्यां वराहो मृत इति भा
वः ॥७६॥ गद्यं॥ तदा प्रकुपितोपि कुरुवीरः अर्जुनः तपःशांततया तपसा वलंबित शांत्या अतिपरुषं अतिकठोरं नोवाच ॥१७॥ ॥८॥ ५

॥ पद्यं ॥ हे शबर मम आवसथं स्थानं आपतिते आयाते मया प्राक् पूर्वलक्षीकृते अस्मिन्वराहे यत् यस्मात्त्वया प्रहृतं त्वया बाणप्रहारः कृत इत्यर्थः त
त्तस्मात्त्वं शापस्य अथवा धनुषः वशो अधीनतायां असि ममशापेन बाणप्रहारेण वा शापार्होसीत्यर्थः तथापि अद्य मम तपसा भुजोष्मणा भुजप्र
तापेन च सोढं शांत्या तपसा असाम्यात् भुजोष्मणा च सोढमिति निश्चयं ॥ ७७ ॥ इति तस्य मुनेः अंतर्दर्परसस्य अभ्यंतरीयगर्वरसस्य परिवाहानां स्रो

अस्मिन्ममावसथमापतिते मया प्राग्लक्षीकृते शबर यत्प्रहृतं त्वयानन शापस्य वाथ धनुषो सि वशे तथापि सोढं ममा
द्य तपसा च भुजोष्मणा च ॥ ७७ ॥ गद्यं ॥ इति तस्य मुनेरंतर्दर्परसपरीवाहवेणीमिव वाणीमाकर्ण्य क्षोणीधरध
न्वापि सस्मितं प्रत्यभाणीत् ॥ १८ ॥ पद्यं ॥ मृदुबुद्धिरंग वचसैव लक्ष्यसे मृगहिंसनं विपिनसीमनीदृशं शतशः
स्वधर्म इति पठ्यते बुधैः शबरस्य वाथ वद नपोधनस्य वा ॥ ७८ ॥ ॥ ॥ ॥

तसां वेणीमिव सर्वस्रोतसां मेलनेन महाप्रवाहमिव वाणीं आकर्ण्य क्षोणीधरः मेरुर्हिमालयो वा अभिपुरदाहे धनुर्यस्य सः शंकरोपि सस्मितं प्रत्य
भाणीत् प्रत्युत्तरमवोचत् ॥ १८ ॥ पद्यं ॥ अंग हे मुने वचसैव त्वद्युक्तवचनेनैव त्वं मृदुबुद्धिः मंदबुद्धिः लक्ष्यसे ज्ञायसे कुत एतदिति चेत् वनसी
मनि ईदृशं मृगहिंसनं मृगयया वनपशुहिंसा स्वधर्म इति बुधैः शतशः शतवारं पठ्यते स स्वधर्मः शबरस्य अथवा तपोधनस्य मुने वद ब्रूहि ॥ ७८ ॥

तत्तस्मात् स्वकुलाचारात् अप्रमाद्यते सावधानतया त्वं शं न प्राप्नुयते मह्यं अयुक्तकारिणापि त्वया तपस्विबाहावपि आहो पुरुषिकाशापेन बाहुबलेन यात्वत्र्या-
शं कुर्यामिति गर्वेण आत्मनि संभावना क्रियते दूरं अतिबहु प्रकाश्यते प्रकटी क्रियते स्वाचारभ्रष्टेन बलहीनेन त्वया मदपकारः किंचिदपि कर्तुं न शक्य इति भा-
वः १९ कुत एतदिति चेत्तपसो ऽशुद्धत्वाद्बाहुबलस्याल्पत्वाच्चेत्याह संदृश्यत इति एतन्नूतवतपः अशुद्धं संदृश्यते अवलोक्यते खलु यत् तपः जंतूनां प्राणिनां हिं-
सनविधौ हिंसाकरणे दृढबद्धः कच्छो येन तत् सन्नद्धमित्यर्थः इयं परिहासोक्तिः हिंसापरत्वादशुद्धमित्यर्थः इदं अकिंचित्करं भुजबलं च आस्तां पत्

ग० तत्स्वकुलाचारादप्रमाद्यते मह्यमयुक्तकारिणापि क्रियद्दूरं प्रकाश्यते तपसि बाहावप्याहोपुरुषिका १९ प० संदृश्यते खलु तपस्तवस्मु
द्धमेतद्यज्जंतुहिंसनविधौ दृढबद्धकच्छं आस्तामिदं भुजबलं च मृगात्यये यस्मिन् साहायकं यदुपजीवति मे शबरस्य ७९ ईदृशीं वचनरीति
मपास्यन्नेहि सांत्वय क्रियानसि मे त्वं अक्ष्णि किंचिदरुणिम्नि जगत्यामंतकोपि मदतीव बिभीयात् ॥ ८० ग० इति शंकरस्य न्यक्कारवा
देन सातंकः कुरुशशांकः पुनरपि गिरं कामप्येवमंकुरयामास २०
अस्मिन्मृगात्यये वराहवधे मम शबरस्य साहायकं सहायत्वं उपजीवति अवलंबते ७९
ईदृशीं अस्मिन्प्रमाद समये मा पतितेति पद्योक्तप्रकारां वचनरीतिं अपास्यन् त्यजन् सन् एहि आगच्छ सांत्वय ममापराधं क्षमस्वेत्यादिवचनेन मत्सांत्वनं कुरु त्वं मे
क्रियानसि मत्पुरतोल्पत्वोऽसीत्यर्थः अक्ष्णि मम नेत्रे किंचिदरुणिम्नि सति कोपेन रक्ततायां सत्यां जगत्यां जगति अंतकोपि मत् मत्तः अतीव बिभीयात् भयं प्राप्नुया
त् अन्यस्य का वार्तेत्यर्थः ८० इति शंकरस्य न्यक्कारवादेन धिक्कारवचनेन सातंकः संतप्तः कुरुशशांकः कुरुश्रेष्ठः पुनरपि एवं वक्ष्यमाणप्रकारां कामपि गिरं अंकुर

यामास भकर्टाचकार ८० हेवनेचरकुलाधम यस्मात्त्वं हृप्तः गर्वितः त्वंस्वजनस्यमनः पुलकयन्नुसन् एवंवदसितस्मात् उपांतजुषः समीपवर्तिन्याः किरात्याः
स्वस्त्रियाः कपोलस्यगल्लस्यमित्रं शोभाकरमित्यर्थः ताटंकमेव कर्णभूषणमेव असंशयंनिःसंशयंनसहसे किरात्याः सौभाग्यंनसहसेइत्यर्थः अनेनभाषणे
नत्वंममवध्योसीतिभावः॥८१॥सर्वेगणाः प्रमथादयः तादृक् उक्तप्रकारं श्रवणदाहिकर्णयोस्तापकरंमुनेःवचःनिशम्यश्रुत्वाहृदि मनसिरुषारोषेणनिजि
घांसवोपि निहंतुमिच्छवः संतोपिस्मितंगर्भे अंतर्भागेययोस्तौगंडौयस्यतत् देव्याःपार्वत्याःवदनंविलोक्य तूणात् इषुधेः अर्धयथातथाकृष्टःआकृष्टः

प० यस्माद्वनेचरकुलाधमजल्पसित्वमेवंमनःपुलकयन्स्वजनस्यहृप्तः तस्मादसंशयमुपांतजुषः किरात्यास्ताटंकमेवसहसेनकपोलमित्रं८१
तादृग्वचःश्रवणदाहिमुनेर्निशम्यसर्वेगणाहृदिरुषानिजिघांसवोपि देव्याविलोक्यवदनंस्मितगर्भगंडंतूणार्धकृष्टविशिखेनकरेणतस्थुः
८२अयभिल्लमल्लकुरुवल्लभावुभौपरिफुल्लमल्लकुलशल्यपल्लवैः स्थगितावलोकसरणिंदिवौकसांसमरंभयंकरजवंवितेनतुः८३

विशिखः बाणोयेन तेनकरेणतस्थुः तिष्ठंतिस्म देव्यावदनांतर्गतहास्येनरोषाभावंज्ञात्वा यंवध्योवानवेतिसंदेहाद्आज्ञांप्रतीक्षमाणा अर्धाकृष्टविशि
खेनकरेणतस्थुरितिभावः॥८२॥अथभिल्लमल्लः शबरश्रेष्ठः कुरुवल्लभः कुरुश्रेष्ठश्चउभौभयंकरःजवोयस्यतंसमरंसंग्रामंवितेनतुः चक्रतुः कथं
भूतंसमरं परिफुल्लैः विकसितैः भल्लकुलानांस्थूलबाणसमूहानां शल्यपल्लवैः कृत्वादिवौकसांदेवानांस्थगिता आच्छादिता अवलोकसरणिः दर्शन २१
मार्गोयस्मिन्तं अत्रदिवौकसामितिपदार्थस्यसमासैकदेशावलोकपदार्थेनसंबंधेपिनित्यसापेक्षत्वात्समासः॥८३॥ ॥छ॥ ॥छ॥

सएषः अर्जुनः श्रवणात् कर्णात् आलंबने तत् श्रवणालंबि यत् जपाक्षसूत्रं जपसाधनरुद्राक्षमाला तस्य घर्षात् घर्षणात् श्लथाः शिथिलाः संधयो ये
षां तथाभूताः गरुतः पत्राणि येषां तैः बाणैः प्रमथे शं शिवं अवाकिरन् आच्छादयन् कैः किमिव यथा दिव्यं अलौकिकं प्रतिमालिंगं तस्य प्रतिमारू
पं लिंगं प्रसूनपुंजैः अवकिरंति तद्वत् ॥ ८४ ॥ हरे सद्दृगासरुषीव सक्रोधे इव बाणप्रहारगर्वोक्तिजन्यरोषाभावात् इवेत्युक्तिः विकृष्टं आकृष्टं चा
पं येन तस्मिन् सति देवी गौरी शैलसुतापि जाताशंका प्रहारसंशयो यस्यास्तथाभूता सती मघवत्कृतस्य अर्जुनस्य मंगलाय कल्याणाय मनसा न

श्लथसंधिगरुद्भिरेषबाणैः श्रवणालंबिजपाक्षसूत्रघर्षात् प्रमथेशमवाकिरत्स दिव्यं प्रतिमालिंगमिव प्रसूनपुंजैः ८४ सरु
षीव हरे विकृष्टचापे सहसा शैलसुतापि जातशंका मघवत्कृतमंगलाय देवी मनसायातइषुः श्रुतिं जजाप ॥ ८५ ॥ ससं
भ्रमाकृष्टधनुर्गुणोपि शंभुः कृपांभोनिधिरिंद्रसूनोः संबद्धमात्रान्कतिचिच्च देहे न्यक्के परात्यान्कतिचिच्च बाणान् ॥ ८६ ॥

तुप्रकटं यातइषुश्रुतिं यातइषुः शिवनमेतिया जुषरुद्रसूक्तऋचं जजाप तस्या अयमर्थः हेरुद्र ते इषुः धनुश्च स्फुरत्प्रकारकं भवतां लक्ष्याणि सुखी
नि भवंतु नैरस्मान्सुखयेति देव्यापि जातशंकाभूत् किमन्ये वक्तव्या इत्यपिशब्दार्थः यद्वा शैलमघवतोः शत्रुत्वेन शत्रुसुतापि तत्पुत्रकल्याणार्थं श्रु
तिं जजाप किं पुनरन्ये वक्तव्या इत्यर्थमपिशब्दः सर्वेषां मंगलाशंसने सौजन्यं कारणं ॥ ८५ ॥ कृपांभोनिधिः शंभुः ससंभ्रमं सत्वरं यथा तथा आकृष्टः ध
नुर्गुणो येन तादृशः सन्नपि इंद्रसूनोः देहे कतिचित् बाणान् संबद्धमात्रान् सृष्टमात्रान् न्यक्के कतिचित् बाणान् अपरात्यान् लक्ष्यात् च्युतांश्चक्रे ८६ ॥ ॥

विजयस्य अर्जुनस्यबाणाः शंभुंविगाह्यप्रविश्यपुनः दृष्ट्योर्नेत्रयोः पदंविषयत्वंनपुपुषुः दृग्गोचरानबभूवुरित्यर्थः शंभौलीनाबभूवुरितिभावः एत-
देवश्लेषोत्थापितार्थांतरन्यासेनसमर्थयति नरादिति मार्गणाः बाणाः याचकाश्च उदारात् महतः दातुश्च नरात् अर्जुनात् मनुष्याच्च उदारतरंविहायेत्
त्यर्थः लुब्धं लुब्धकं शबरं लोभिनंच अधिगम्यप्रकाशंप्रकटतांप्रसिद्धिंनयांतिनप्राप्नुवंति॥ ८७॥ पूर्वंकुपितः निषंगयोः तूणीरयोः युगलेनिःस्वे बा

विगाह्यशंभुंविजयस्यबाणाः पुनः पदंलंपुपुषुर्नदृष्ट्योः नरादुदारादभिगम्यलुब्धंनमार्गणायांतिपुनःप्रकाशं
८७ निःस्वेनिषंगयुगलेनितराममर्षीचापेनमूर्ध्निगिरिशंपुरएवदेव्याः पार्ष्णिप्रमुक्तधरणिःप्रजहारवेगात् कुर्व
न्व्रणंसकुपितः शशिखंडमित्रं॥ ८८॥ धनुषाभिहतात्समुत्थितैर्धरकन्यारमणस्यमस्तकात् विपुलैरिव
रक्तशीकरैर्विनिपेतेमणिभिःफणाभृतां॥ ८९॥ ॥ ॥ ॥ ॥ ॥

णेः रिक्तेसति नितरां अमर्षीक्रोधनः पार्ष्णिभ्यां पादपश्चादंघ्रि
भागाभ्यांप्रमुक्ताधरणिर्येनसः अर्जुनः देव्याः पुरः अग्रभागे एवगिरिशंमूर्ध्निचापेनवेगात् प्रजहार प्रहृतवान् किंकुर्वन् शशिखंडस्यमित्रंसहचरंव्र
णं कुर्वन्सन् शिवः तंव्रणं शशिखंडवत् भूषणत्वेननित्यंदधारेत्यर्थः॥ ८८॥ धनुषा अभिहतात् ताडितात् धरकन्या रमणस्यशिवस्यमस्तकात्स
मुत्थितैः उत्पतद्भिः विपुलैः रक्तशीकरैरिव रक्तबिंदुभिरिवफणाभृतांभूषानागानांमणिभिःफणासंबंधिलोहितरत्नैः निपेतेपतितं॥ ८९॥ ॥

२२

जगतांजनकस्य तस्यदेवस्यशिवस्यचित्ते पार्थप्रहारात् जनुः उत्पत्तिर्यस्यतस्यप्रमदांबुराशेः हर्षसमुद्रस्यभूषाधुनीशिरोभूषणभूता भागीरथी तस्याः तटभुविद्विपवक्त्रस्यगजाननस्यबाल्येवप्रक्रियाभिः तिर्यक्कुदंतप्रहारैः उदितंउत्पन्नः प्रमदः हर्षः कणः बिंदुः अभूत् शिवेनपार्थप्रहारजन्यहर्षसमुद्रस्यपुरतः स्वपुत्रगजाननबालक्रीडासंबंधिप्रहारजन्यहर्षः बिंदुवदल्पत्वोमानीत्यर्थः १०॥ ग० तत्रसः गांडीवदंडोपिखांडवेतक्षकवध्वाः वधस्यसाधनतयाकारणतयाचिरंबहुकालं अयंगांडीवदंडः अस्मत्कुलस्यविरोधीवैरी इतिमनस्यानीयक्रोधनैः क्रोधविशिष्टैः तस्यशिवस्यजटावनकु

देवस्यतस्यजगतांजनकस्यचित्तेपार्थप्रहारजनुषः प्रमदांबुराशेः भूषाधुनीतटभुविद्विपवक्त्रबाल्यवप्रक्रियाभिरुदितः प्रमदःकणोभूत् १० ग० तत्रसगांडीवदंडोपिखांडवेतक्षकवधूवधसाधनतयाचिरमयमस्मत्कुलविरोधीतिक्रोधनैस्तस्यजटावनकुटुंबिभिः कुंडलिभिर्भक्षितइवतत्क्षणंनालक्ष्यत २० ततोयंदैवविपर्ययः किममुष्यमायाकिमितिचिंतापरतंत्रेणापिधैर्यदत्तहस्तोत्साहेनतिष्ठजडात्मन्नर्जुनमेवंनिर्जित्ययशोर्जितुमिच्छसीतिकृततर्जनेनसितवाहनेनवृषभवाहनंप्रतिनियोद्धुमारेभे॥ २१॥

टुंबिभिः जटावनवासिभिः कुंडलिभिः नागैः भक्षितइवतत्क्षणंतस्मिन्समयेनालक्ष्यतनादृश्यत गांडीवोपिशिवमस्तकेलीनोभूदितिभावः॥ २०॥ ततः शबरशरीरे शस्त्रलयानंतरं अयंशबरदेहेशस्त्रलयः ममदेवस्यविपर्ययः प्रतिकूलताकिं अथवा अमुष्य शबरस्यमायाकिं इत्याकारिकायाः चिंतायाः परतंत्रेणापिइतिचिंताक्रांतेनापीत्यर्थः धैर्येणदत्तः हस्तावलंबोयस्यतथाभूतः उत्साहः युद्धोत्साहोयस्यतेन हेजडात्मन् मंदबुद्धे शबर तिष्ठ एवंमाय

या अर्जुनं विनिर्जित्य यशः अर्जितुं संपादयितुं इच्छसि इति काकुः इति वचनेन कृता तर्जना भर्त्सना येन तेन सितवाहनेन अर्जुनेन वृषभवाहनं प्रतिशि
वं प्रतिनियोद्धुं बाहुयुद्धं कर्तुं आरेभे आरब्धं ॥ २१ ॥ पद्यं ॥ परुषेण कठिनेन मुनिमुष्टेः ताडने लुब्धकस्य शबरस्य वामवक्षसि वक्षसः वामभागे इत्यर्थः
पतिते सति किरातिकायाः तत्पत्न्याः शाबर्याः सितानां शुभ्राणां गुंजामणीनां हारयष्टयः शिथिलाः सत्यः जगलुः गलंति स्म शिववामांगस्य पार्वतीत्वात्
इति भावः ॥ ९१ ॥ हरोपि भृशं उपवासैः कृशे मुनेः उरसि स्वीकृतं मुष्टिमार्दवं येन तथा भूतः सन् प्रजहार प्रहृतवान् मुष्टिमार्दवस्वीकारे फलमुत्प्रेक्षते पी

॥ पद्यं ॥ परुषे मुनिमुष्टिताडने पतिते लुब्धकवामवक्षसि शिथिलाः जगलुः किरातिकायाः सितगुंजामणिहारय
ष्टयः ॥ ९१ ॥ उपवासकृशे भृशं मुनेरुरसि स्वीकृतमुष्टिमार्दवः प्रजहार हरोपि पीडनात् परिहर्तुं स्वमिवास्य हृद्गतं
॥ ९२ ॥ ग ॥ इति परस्परमुष्टिप्रहारवृष्टिपरिमृष्टवनकुसुमपरागभस्मांगरागौ सरभसमेकेन बाहुना जटासु गृहीत्वा
परेण वलयितकंठनालौ तौ शबरतपोधनौ यदा महत्यामधित्यकायामापततां ॥ २२ ॥ डनादिति अस्य मुनेः हृदि गतं विद्यमानं
स्वं आत्मानं पीडनात् पीडायाः परिहर्तुमिव रक्षितुमिव ध्यानेन हृदि निरुद्धस्यात्मनः पीडा माभूदिति मृदुमुष्टिना प्रहृतवान् किमिति भावः ॥ ९२ ॥ म० इ
ति परस्परस्य मुष्टिप्रहारवृष्ट्या परिमृष्टौ वनकुसुमपरागभस्मांगरागौ ययोस्तौ सरभसं सवेगं एकेन बाहुना जटासु गृहीत्वा परेण अन्येन बाहुना वलयितः २३
वेष्टितः कंठनालो याभ्यां तौ शबरतपोधनौ महत्यां अधित्यकायां हिमाचलोर्ध्वभूम्यां यदा आपततां ॥ २२ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

तदापतनसमये झटितिशीघ्रं घटितानि पिहितानि द्वाराणि यासां तासां दरीणां गुहानां गर्भे अंतर्भागे निरुद्धेः सिद्धमुनिमिथुनेः निबद्धः आरब्धः हाहा
कारो यस्मिन्सः तीरवने दूरं उत्सर्पिणीनां वीचीनां गेवेन पूर्वं उत्पाटितं पश्चात् आकृष्टं मुनिजनानां पर्णशालासहस्रं येन तथाभूतः सुरस्रवंत्याः भागीर-
थ्याः पूरो यस्मिन्सः दर्वीकरविभोः शेषस्य कंधरायाः खर्वीकरणे नीचीकरणे पटुतरः समर्थतरः भारो यस्य सः उर्वीधरपतिः हिमालयः आसीत् २३
प० शंभुना अवाङ्मुखत्वेन अधोमुखत्वेन निपात्य पातयित्वा समुज्झितः त्यक्तः अतएव विमोहितः विशेषेण मूर्छितः अयं अर्जुनः तवजामातरि शिवे अ

ग० तदा झटिति घटितद्वारदरीगर्भनिरुद्धसिद्धमुनिमिथुननिबद्धहाहाकारः तीरवनदूरोत्सर्पिवीचीवेगोत्पाटिताकृष्टमुनिजनपर्णशा
लासहस्रसुरस्रवंतीपूरः दर्वीकरविभुकंधराखर्वीकरणपटुतरभारो यमुर्वीधरपतिरासीत् २४ प० अवाङ्मुखत्वेन निपात्य शंभुना समु
ज्झितोयं ददृशे विमोहितः तवाद्य जामातरि मेदशामिमां निवेदयेत्याद्रिमिवब्रुवन् रहः ९३ पार्थस्य तस्य भुजयोः परमेश्वरोसौ वीर्यं
विलोक्य युधि विस्मयमानचेताः चापव्रणे स्फुरनदीकणसेकशंकामप्युत्सृजन्मुहुरकंपयदुत्तमांगं ९४ द्यमेइमांदशांप्राणावसानावस्थां
निवेदय इति अद्रिं हिमालयं रहः एकांते ब्रुवन्निव ददृशे दृष्टः पर्वते अवाङ्मुखत्वेन स्थितावियमुत्प्रेक्षा ९३ असौ परमेश्वरः युधि तस्य पार्थस्य भुजयोः वी
र्यसामर्थ्यं विलोक्य विस्मयमानचेताः सन् चापव्रणे चापप्रहारजातमस्तकक्षते सुरनद्याः कणानां बिंदूनां सेकस्य शंकां क्षते शीतजलसेचनेनाधिकाव्यथा
भविष्यतीति शंकामप्युत्सृजन् प्रमोदातिशयात् मनसि नानयन् सन् मुहुः उत्तमांगं मूर्धानं अकंपयत् शिरश्चालनेन पार्थस्य वीर्यं धैर्यं च श्लाघयामासेति भावः
९४

॥ गद्यं ॥ तथाविध एवासौ चिरादाचरितचेतनास्वागताचारः शनैः शनैरुत्थाय पुरतो घंटाभरणघणघणात्कारसहचरेण कंठगर्जि
तेन कर्णयोः परिकल्पितसुधारसमोक्षं महोक्षं निषेदिवांसं भुजमूलप्रसारितगिरिजापाणियुगनखरेखांकुरधोरणीद्विगुणीकृत
हारमणीरमणीयवक्षसं पारिषद्गणांजलिकमलवनमध्यराजहंसायमानं मार्दवभरितशार्दूलचर्मनिर्मितपल्ययनमंकोप
रिभागतिर्यगर्पितैकचरणपल्लवसंवाहनपरेण शिलादकुमारेण दर्पदुर्ललननिवारणाय मुखबंधकश्मूखलेन निरुध्य मुहुर्मुहुः क
रपुटास्फालितककुदशृंगेण शृंगिरिटिना चलक्ष्यमाणोभयपक्षभागं गांडीवताडनपीडितचूडाशशिनमाश्वासयितुमवतरद्भिः
रुडुनिकरैरिव कुसुमवर्षैरवकीर्यमाणं जटाभसितकुसुमचीरधारिभिस्तैरेव चतुर्भिराम्नायपुरुषैः परिपठ्यमानशतरुद्रीयवि
रुदप्रबंधमंबरे सविधमविलंबमानैस्तुंबुरुप्रभृतिभिः स्फुरद्वैणिकैरुपवीण्यमानभक्तजनरक्षणापदानप्रकरणं कर्णपूरीकृतत
मालमंजरीमधुझरीमिषेण कटाक्षात्साक्षात्कृपामिव वर्षंतं प्रज्वलद्भिः परिष्कारपन्नगफणारत्नैर्नूत्नैः शरव्रणमिवानुबध्यमानाव
यवमासन्नावतंसशशिकलागलितकिरणधारापातसीतासहिष्णुतयेव दंतपटगर्भवर्तिना स्मितेन सूचितहृदयप्रसादं भगवं
तं महादेवमुद्वीक्ष्य पक्ष्मतटरुद्धनिमेषविटपिसमुत्पाटणपटुभिः प्रमोदाश्रुपूरैर्नदीमातृकायमाणपुलकप्ररोहः सविनयमुपा-
सृत्य पादारविंदयोः सहस्रकृत्वः प्राणंसीत् ॥ २४ ॥ ॥ ॥ ॥ ॥ ॥



श्रीसदाशिवाय नमः ॥ ॥ ॥ श्रीपार्वतीपतये नमः ॥ ॥ ॥ ॥

॥ग्र०॥ तथाविधएव अवाङ्मुखस्थितएव असौ अर्जुनः चिरात् बहुकालेन आचरितः कृतः चेतनायाः संज्ञायाः स्वागताचारः आगमनसत्कारो येन सः मूर्छा
पगमेन प्राप्तसंज्ञः सन्नित्यर्थः पुरतः भगवंतं महादेवं उद्वीक्ष्य पक्ष्मतटेषु रोहंति उद्भवंतिते पक्ष्मतटरुहाः तेषां निमेषविटपिनां निमेषवृक्षाणां समु
त्पाटने पटुभिः प्रमोदाश्रूणां हर्षाश्रूणां पूरैः नदीमातृकायमाणः नदीमातृकदेशवदाचरन् पुलकप्ररोहः रोमांचोद्गमो यस्य सः निर्निमेषः आनंदाश्रुपू-
र्णः सरोमांचः सन्नित्यर्थः सविनयं उपसृत्य शिवसमीपं गत्वा पादारविंदयोः सहस्रकृत्वः सहस्रवारं प्राणंसीत् साष्टांगं प्रणनाम कथंभूतं महादेवं घं
टाभरणानां घणघणत्कारस्य सहचरेण सहायेन घंटाशब्दयुक्तेनेत्यर्थः कंठगर्जितेन कर्णयोः परिकल्पितः संपादितः सुधारसमोक्षो येन तस्मिन्महोक्षे
महावृषभे निषेदिवांसं आरूढं पुनः कथंभूतं महादेवं भुजमूलयोः प्रसारितस्य गिरिजायाः पाणियुगस्य नखरेखांकुराणां धोरणी वक्षसो धोभागादूर्ध्व
क्रमेणावस्थिति शैलीनया द्विगुणीकृताभिः हारमणीभिः अरुणरत्नैः रमणीयं वक्षो यस्य तं पुनः० पारिषदगणानां अंजलय एव कमलवनं तस्य म
ध्ये शुभ्रत्वात् राजहंसायमानं ॥ पुनः० मार्दवेन भरितं युक्तं यत् शार्दूलस्य व्याघ्रस्य चर्म तेन निर्मितं पत्ययनं वृषभपृष्ठास्तरणं येन तं ॥ पुनः० अंक-
स्य उत्संगस्य उपरिभागे तिर्यगर्पितस्य तिर्यक्स्थापितस्य एकचरणपल्लवस्य संवाहनपरेण मर्दनपरेण शिलादकुमारेण नंदिकेश्वरेण दर्पणान्
दुर्ललनं दुश्चेष्टितं तस्य निवारणाय मुखबंधने कनकशृंखलेन निरुध्य वेगनिरोधं कृत्वा मुहुर्मुहुः करपुटेन आस्फालितं मृदुताडितं ककुद्स्य शृंगं
अग्रं येन तेन भृंगिरिटिना लक्ष्यमाणौ ध्रियमाणौ उभयपक्षभागौ उभयपार्श्वभागौ यस्य तं ॥ पुनः० गांडीवदंडताडनेन परिपीडितं व्यथितं चूडाशशि
नं आश्वासयितुं अवतरद्भिः भूतलमागच्छद्भिः उडुनिकरैरिव नक्षत्रसमूहैरिव स्फुरत् कुसुमानां रूपहृद्य प्राणां वर्षैः वृष्टिभिः अवकीर्यमाणं

आच्छाद्यमानं॥ पुनः० जटाभस्मकुशावल्कलधारिभिः तैः प्रसिद्धैरेव चतुर्भिः आम्नायपुरुषैः वेदपुरुषैः परिपठ्यमानः शतरुद्रीयसंज्ञकः प्रबंधः यजुर्वे
दस्यमहत्वप्रतिपादकग्रंथो यस्यतं॥ पुनः० अंबरे आकाशे सविधं समीपं यथातथा अवलंबमानैः अवस्थितैः तुंबुरुनामागंधर्वः सः प्रभृतिः आदिर्येषांतैः
सुरवैणिकैः देवगायकैः उपवीण्यमानानि वीणावादनेन सहगीयमाननिजभक्तजनरक्षणसंबंधीनि अपदनप्रकरणानि वृत्तकर्मप्रकरणबंधाः य
स्यतं॥ पुनः० कर्णपूरीकृताकर्णावतंसीकृतायातमालमंजरीतस्याः मधुझरीमिषेणमकरंदप्रवाहमिषण कटाक्षात् साक्षात् मूर्तिमंतीकृपामिववर्ष
तं॥ पुनः० प्रज्वलद्भिः देदीप्यमानैः परिष्कारपन्नगानां भूषानागानां फणारत्नैः फणासंबंधिमाणिक्यै नूलैः नूतनैः शरव्रणैरिव अनुवध्यमानाः रव

प० स्वामिन्मयाजडधियात्वयिदेवदेवेवाचाशरेण धनुषादृढमुष्टिनाच यत्तेचतुर्विधमकारिरणेतदागः क्षंतव्यमद्यभवताकरुणार्णवेन ९५

चिताः अवयवाः यस्यतं॥ पुनः० आसन्नायाः समीपवर्तिन्याः अवतंसशशिकलायाः सकाशात् गलितायाकिरणधारातस्यापातेन स्वस्मिन्पतनेन-
यत्तूशीनंतस्य असहिष्णुतयेव असहनेनेव दंतपट्योः दंतवाससोः ओष्ठयोः गर्भे अंतर्भागेवर्तिनास्मितेन सूचितः हृदयप्रसादोयस्यतं॥ २४॥ पद्यं॥
प्रणामानंतरं आदौस्वापराधानांक्षमांप्रार्थयते स्वामिन्निति हेस्वामिन् प्रभोजडधियामंदबुद्धिनामयादेवानांब्रह्मादीनामपिदेवेपूज्येप्रथमंवाचादुर्भाषणेनत
तःशरेणबाणप्रहारेणततः धनुषामस्तके धनुर्दंडताडनेन ततः दृढमुष्टिना वक्षसिदृढमुष्टिप्रहारेणचइति चतुर्विधंतेतवयत् आगः अपराधः रणे २५
संग्रामे अकारितत् आगः अद्यकरुणार्णवेनभवताक्षंतव्यं॥ ९५॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥

॥ गद्यं ॥ इतिविज्ञापयंतं पारिजातस्य कल्पवृक्षस्य यः पल्लवतल्लजः प्रशस्तपल्लवः तस्य प्रतिमल्लस्य प्रतिभटस्य पाणिपल्लवस्य परामर्शनेन स्पर्श नेन प्रमुषिता अपहृतारणवेदना यस्य तस्य तादृशं अंगं यस्य तं एनं प्लवंगकेतनं वानरध्वजं अर्जुनं अनंगशासनोपि एवं वक्ष्यमाणं अवादीत् अ वोचत् ॥ २५ ॥ पद्यं ॥ हे प्रवीर युधि उक्तापराधेषु तृतीयेन धनुर्दंडताडनेन तव अपराधेन हृष्टः संतुष्टः यथा भवामि तथा भक्त्या तरुप्रसूनैः अ

॥ गद्यं ॥ इतिविज्ञापयंतमेनं पारिजातपल्लवतल्लजप्रतिमल्लस्य पाणिपल्लवस्य परामर्शनेन प्रमुषितरणवेद नांगं प्लवंगकेतनमनंगशासनोप्येवमवादीत् ॥ २५ ॥ यथा तृतीयेन युधि प्रवीर तवापराधेन भवामि हृष्टः तथा न भक्त्या तपसां विभूत्या तरुप्रसूनार्चनयापि बल्या ॥ २६ ॥ ॥ ॥ ॥ ॥

र्चनया पूजया कृत्वा बल्या महत्या तपसां विभूत्या समृध्द्यापि हृष्टः न भवामि त्वया वीरेण शस्त्राभावेपि धैर्येण कृत्वा मम मस्तके प्रहारः कृतः तज्जन्यसंतोषेण सर्वेपराधाः क्षांता इति भावः ॥ २६ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

॥ गद्यं ॥ इतिसुधामाधुर्या: धुरीणं भार वाहकं अमृततुल्यमित्यर्थः वचनमभिधाय उक्त्वा ॥ २७ ॥ पद्यं ॥ विभुः सदाशिवः तत्क्षणात्पूर्वं गुप्तीकृतान् तान् तान् धनुः इषूनपि सन्निधाप्य सन्निधिं गमयित्वा पांडवाय अर्जुनाय स्वं स्वकीयं अस्त्रं पाशुपतास्त्रमपि धनुषा आहृतेः ताडनस्य रीतेः पारितोषिकमिव संतोषेण दीयमानं वेतनातिरिक्तं दानमिव प्रदिदेश दत्तवान् ॥ ९७ ॥ अथ आश्चर्या आश्चर्यकारिणी वृत्तिः रू

॥ गद्यं ॥ इतिसुधामाधुरीधुरीणं वचनमभिधाय ॥ २७ ॥ पद्यं ॥ तत्क्षणाद्धनुरिषूनपितांस्तान्सन्निधाप्य विभुर
स्त्रमपि स्वं पाडवाय धनुराहृतिरीतेः पारितोषिकमिव प्रदिदेश ॥ ९७ ॥ तस्याथ पाशुपतलाभदुरापदीप्तिर
ण: समक्षमपरिप्लुवपक्ष्मपंक्तेः आश्चर्यवृत्तिरखिलैरनुगामिभिः स्वैरंतर्दधे स भगवानमृतांशुमौलिः ॥ ९८ ॥ ॥
इतिश्री अनंतभट्टकृते श्रीमति चंपुभारते चतुर्थस्तबकः समाप्तः ॥ ४ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥ छ ॥ ॥

पांतरेणागमनादिव्यापारो यस्य सः भगवान् अमृतांशुमौलिः शिवः पाशुपतस्य अस्त्रस्य लाभेन दुरापा इतरेषां दुर्लभा दीप्तिर्यस्य अपरिप्लुवानि मेषाभावात् अचंचला पक्ष्मपंक्तिर्यस्य तस्य अर्जुनस्य अक्ष्णः समक्षं अखिलैः अनुगामिभिः सेवकगणैः सह अंतर्दधे गुप्तो बभूवेति शिवं ॥ ९८
इतिश्रीमदनंतभट्टकृतचंपूभारतटीकायां श्रीखंडापाध्ये नारायणसूरिविरचितायां चतुर्थस्तबकः समाप्तिमगमत् ॥ ४ ॥ ॥ छ ॥ ॥ छ ॥

